# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]



१८ वर्षे, ४ अङ्कः

संवत् २०२०



प्रकाशनतिथिः

फाल्गुनपूर्णिमा, संवत् २०२०

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]


सम्पादकः

श्रीक्षेत्रेशचन्द्रचट्टोपाध्यायः ।






१८ वर्षे, ४ अङ्कः

संवत् २०२०

# विषयानुक्रमणिका



## विविधम्





// सारस्वती सुषमा
वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१८ वर्षः } फाल्गुनपूर्णिमा, संवत् २०२० { ४ अङ्कः

# लकारार्थविचारः

श्रीमुरलीधरमिश्रः, वा० सं० वि० वि० व्याकरणविभागाध्यक्षः ।

कालाख्यां यां समाश्रित्य शब्दब्रह्म विवर्तते ।
जगदाकाररूपेण शक्तिं तां समुपास्महे ॥

प्रकृत्या प्रत्ययेनाथ शब्दब्रह्माभिधीयते ।
अपोद्धारप्रणाल्या वै प्राधान्यं प्रत्ययेष्विह ॥

प्रत्ययेषु प्रकृष्टत्वं लकारे विधिवाचके ।
प्रवृत्तेर्विनिवृत्तेश्च साधके दृश्यते यतः ॥

भिन्नेष्वर्थेषु सत्स्वेव कालो विध्यर्थ एव च ।
लकारार्थो निबन्धस्य वर्ण्येते विषयाविह ॥

यद्यपि वैयाकरणानां मते प्रयोगस्थानां तिङादीनामेव वाचकत्वं न तु स्थानिनो लकारादेः, निर्णीतं चैतद् महता समारोहेण वैयाकरणभूषणसारे वैयाकरणसिद्धान्तमञ्जूषायाञ्च, तथापि तिङां सर्वत्रैकरूप्येऽपि स्थानिलकारभेदेनैव भूतभविष्यद्वर्तमानकालानां विध्याद्यर्थानाञ्च भेदेन प्रतीत्या लकारार्थत्वेनैषां व्यवहारः । इममेवाभिप्रायमाश्रित्य सिद्धान्तकौमुद्यां लकारार्थप्रक्रिया, भूषण-

सारादौ लकारार्थनिर्णय इत्याद्युल्लेखः संगच्छते। अन्यथा तिङादीनामेव वाचकतया तदसंगतिः स्पष्टैव।

तत्र लकारार्थो भूतभविष्यद्वर्तमानाद्यतनानद्यतनपरोक्षादिभेदेनानेकविधः। तत्र विशेषाणामनेकत्वेऽपि सामान्येन कश्चिदेकः कालोऽवश्यमभ्युपेतव्यः। स च कालः किंस्वरूप इति जिज्ञासायां कालविषये दार्शनिकैर्बहु पराक्रान्तत्वाद् विस्तरभिया तेषां मतान्यविगणय्यैव केवलं वैयाकरणमतमाश्रित्य किञ्चिद्विमृशामः। तत्र वैयाकरणमतप्रवर्तका अद्यत्वे मुनित्रय एव समाद्रियमाणा आसन् सत्स्वपि वैयाकरणप्रवरेषु गार्ग्यशाकल्यशाकटायनाद्यनेकाचार्येषु। तत्र पाणिनेरष्टाध्याय्यां वर्तमानादिकालविशेषाणां नामोच्चारणादिसत्त्वेऽपि विशेषेण तस्मिन् विषये न किञ्चिदवलोक्यते। कात्यायनप्रणीतवार्त्तिके कालविशेषविषये विचाराणां सत्त्वेऽपि सामान्यरूपेण कालस्वरूपनिरूपण औदासीन्यमेव लक्ष्यते। महर्षिपतञ्जलिप्रणीतमहाभाष्ये कालसामान्यविषये विशेषरूपेणानुक्तावपि "येन मूर्त्तीनामुपचयापचयौ लक्ष्येते तं कालमाहुः" इत्युक्तम्। अत्र कैयटः—"तरुतृणगुल्मादीनां कदाचिदुपचयोऽन्यदा त्वपचयः। स प्रत्ययान्तराविशेषेऽपि यत्कृतः स काल इत्यर्थः" इति। अत्र येन, तं कालमित्युभयत्रैकवचनेन कालस्यैकत्वं सूचितम्। अत्र नागेशेन स्वकीयोद्योते कैयटस्थप्रत्ययान्तरपदस्य कारणान्तरेति विवृतिरभिहिता।

"तस्यैवैकस्य कालस्य कयाचित्क्रियया युक्तस्याहरिति च भवति रात्रिरिति च। कया क्रियया? आदित्यगत्या। तयैवासकृदावृत्त्या मास इति संवत्सर इति च" इति महाभाष्ये उक्तम्। अत्र कैयटः—"यद्येवं तस्यैकत्वात् कथमहरादिविभाग इत्याह—तस्यैवेति। सोपाधिक एव सर्वस्य भेदः" इति। तदुक्तं भर्तृहरिणा—

मूर्त्तीनां तेन भिन्नानामाचयापचयाः पृथक्।
लक्ष्यन्ते परिणामेन सर्वासां भेदयोगिना॥ इति।

सर्वाः क्रिया उत्पत्तिस्थितिलयेष्वेवान्तर्भूताः। उत्पत्तिस्थितिलयानाञ्च यन्निमित्तं स एव कालः। कालादेव वस्तूनामुदयादिः प्रविभक्तशरीरतया विभाव्यते। यथा केचिद् वसन्ते प्रसूयन्ते, अपरे शरदि, प्रावृष्यन्ये। अयं व्यवहारः कालादिकृत एव। सूत्रधारकृतो यथा यन्त्रस्थपुरुषस्य लोकनृत्ये 'कठपुतली' इति ख्याते सर्वे क्रियाकलापा भवन्ति। एवमेव कालकृतो विश्वस्य क्रियाकलापः। अन्यथा युगपदेव सर्वाः सर्वेषु वस्तुषु प्रवर्तेरन्। कालस्याङ्गीकारे तु यदा सोऽभ्यनुजानाति तदा वस्तुषु काचित्क्रियाऽभ्युदेति, यदा प्रतिबध्नाति तदा क्रियाऽवरुध्यत इति क्रियासु पौर्वापर्यव्यवहारः सम्यक् सम्पद्यते।

## लकारार्थविचारः

वस्तुतः सर्वं वस्तु स्वतो भेदाभेदाभ्यां शून्यमपि संसर्गिवस्तुसंबन्धाद्भेदेन प्रतीयते। अत एकस्यापि कालस्यादित्यक्रियासंबन्धेन क्षणदिनमाससंवत्सरादिभेदव्यवहाराः संजायन्ते। स एव कालः सर्वाधिष्ठानभूते शब्दब्रह्मणि शक्तिरूपेणावतिष्ठते। यां शक्तिमाश्रित्यानन्ताः कलारूपाः शक्तयो जन्मादिकारणरूपतां भजन्ते। तदुक्तं भर्तृहरिणा—

अव्याहताः कला यस्य कालशक्तिमुपाश्रिताः।
जन्मादयो विकाराः षड् भावभेदस्य योनयः॥ इति।

तथैव स्वातन्त्र्यशक्त्या युक्तं ब्रह्म जगत्कर्तृत्वेन व्यवह्रियते। शक्तिशक्तिमतोर्वस्तुतो भेदाभावात् कालशक्तिस्वीकारेऽपि नाद्वैतहानिः। तदुक्तमभिनवगुप्तप्रणीतपञ्चदशिकायाम्—

शक्तिश्च शक्तिमद्रूपाद् व्यतिरेकं न वाञ्छति।
तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव॥ इति।

वाक्यपदीयेऽपि—

एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात्।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते॥ इति।

सा चैषा स्वातन्त्र्यशक्तिर्न वेदान्तिनां मायेवानिर्वाच्या तत्त्वज्ञानेन निवर्त्या च, किन्तु कालाख्या नित्यैव सत्या। अतस्तन्निवर्तने न तत्त्वज्ञानस्य सामर्थ्यम्, भ्रान्तिज्ञाननिवर्तन एव तस्य सामर्थ्यावधारणात्। तदुक्तं भर्तृहरिणा कालसमुद्देशे—

उत्पत्तौ च स्थितौ चापि विनाशे चापि तद्वताम्।
निमित्तं कालमेवाहुर्विभक्तेनात्मना स्थितम्॥
तमस्य लोकयन्त्रस्य सूत्रधारं प्रचक्षते।
प्रतिबन्धाभ्यनुज्ञाभ्यां तेन विश्वं विभज्यते॥
यदि न प्रतिबध्नीयात् प्रतिबद्धं न चोत्सृजेत्।
अवस्था व्यवकीर्येरन् पौर्वापर्यविनाकृताः॥
तस्यात्मा बहुधा भिन्नो भेदैर्धर्मान्तराश्रयैः।
नहि भिन्नमभिन्नं वा वस्तु किञ्चन विद्यते॥ इति,
संसर्गिणां तु यो भेदो विशेषास्तस्य ते मताः।
संभिन्नस्तैरवस्थानां कालो भेदाय कल्पते॥ इति च।

अत्र केचिद् व्याख्यातारो भर्तृहरिमतमित्थं व्याचक्षते यत्कारणशक्तिरेव कालः 'तमस्य लोकयन्त्रस्य' इत्यादिश्लोकबलेन। तथाहि—यदा बीजशक्तिरङ्कुरोत्पत्तिमभ्यनुजानाति, तदानीमङ्कुरगतां काण्डोपजननानुकूलां शक्तिं स्वकार्यकरणान्निवारयति। एवमङ्कुरगता शक्तिर्यदा काण्डोत्पादं विधत्ते, तदा कारणान्तरगतामागामिकार्यानुकूलां शक्तिं स्वकार्यकरणात् प्रतिबध्नाति। तेन कारणगता शक्तय एव कालतत्त्वम्। इमं मतविशेषम्—

शक्त्यात्मदेवतापक्षे भिन्नं कालस्य दर्शनम्।
प्रथमं तदविद्यायां यद्विद्यायां न विद्यते॥

इति भर्तृहरिकारिकायां हेलाराज आविरकार्षीद्। परन्तु नेदं मतं भर्तृहरिसम्मतम्। यतो हि तत्तत्कार्यं प्रति कारणानां नियतत्वाद् नियतकारणेषु सत्स्वपि कालस्यान्वयव्यतिरेकाभ्यां सहकारिकारणत्वमित्यस्यैवार्थस्यानुभवात्। एवमेतत्कारिकाव्याख्यायामेव जीवो नाम कालः स एव स्वादृष्टवशाद्भावेषु प्रतिबन्धाभ्यनुज्ञे विदधाति। एवं काचिद् देवता महाप्रभावैव काल इत्येतन्मतद्वयमज्ञाताचार्यकर्तृकं वर्तते।

वैयाकरणसिद्धान्तमञ्जूषायां तु प्रकृतेः सत्त्वरजस्तमोगुणात्मिकायाः क्षणरूपा नश्वरा व्यापकाश्च परिणामास्तेषां धारारूपः काल इत्युक्तम्। क्षणविशेषा एव लवपलघटीमुहूर्ताहोरात्रादिद्विपरार्धपर्यन्ता व्यवहारास्पदम्। लवादीनां तेषां भेदानुमापिका तत्तत्पानीययन्त्रादिपरिच्छिन्नकिञ्चित्क्षणसमूहपरिच्छिन्ना सूर्यादिक्रियैव। क्षणानां तु नोपाधित्वम्, अतीन्द्रियत्वात्। अतीन्द्रियद्रष्टृभिर्योगिभिस्तत्तत्क्षणसमूहपरिच्छिन्नत्वं दिनमासादीनां ज्ञात्वा तत्तत्कालनियामकत्वेन यन्त्रपानीयपलानां छायादीनाञ्च निर्णयपूर्वकं नियमनाद् ज्ञानमस्मदादीनाम्। इदं मतं योगमतानुसारीत्यनुमीयते। परन्त्वेवं सति षड्विंशतितत्त्वादाधिक्यं स्यादतः शब्दतन्मात्रपरिणाम एव काल आकाशतत्त्वान्तर्भूतः। एवं दिगपि गगनतत्त्वे एवान्तर्भूता बोध्या। तत्र भूतादिव्यवहारासाधारणकारणं सकलपरिणामकारणं चिरक्षिप्रव्यवहारकारणमित्याद्यनेकलक्षणलक्षितः कालः। तदुक्तं पातञ्जलसूत्रे—"क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम्" इति। तत्र क्षणो नाम कालस्य तद्धारारूपस्यापकर्षविधिभूतः पूर्वापरांशशून्यः। एतन्मतं वैयाकरणाचार्यैरन्यैरगृहीतमपि नागेशभट्टैर्गृहीतं मञ्जूषायामतो मयाप्युट्टङ्कितम्।

कालो द्विविधः—अद्यतनोऽनद्यतनश्च। अद्यतनस्त्रिविधः, भूतभविष्यद्वर्तमानभेदात्। अनद्यतनो द्विविधः—भूतो भविष्यन्च। अपरोऽपि भेदः परोक्षोऽपरोक्षश्च।

## लकारार्थविचारः

तत्र वर्तमाने लडिति सूत्राद्वर्तमानेऽर्थे लटो विधानाद्वर्तमानो लडर्थः। तत्र वर्तमानत्वं प्रारब्धापरिसमाप्तत्वमिति यदि ब्रूयात् तदा प्रवृत्तेऽध्ययने ततोऽविरतेऽपि मध्ये भोजनादिना व्यवाये तत्कालेऽधीमह इति व्यवहारानुपपत्तिः। एवं नित्यप्रवृत्ते पर्वतादौ भूतभविष्यतोरभावात् प्रतिद्वन्द्वीभूतस्य वर्तमानस्याप्यभावेन पर्वताः सन्तीति प्रयोगानुपपत्तिः। तत्रैषा शङ्का भाष्यकृद्भिः पतञ्जलिभिः समाधीयते—"न्याय्या त्वेषा वर्तमानकालता कुत आरम्भानपवर्गाद् आरम्भोऽत्रानपवृक्तः। किञ्च, निःसंशयं वर्तमानकालिकः प्रयोगो भुङ्क्ते देवदत्त इति। तत्राप्यवश्यं भुञ्जानो हसति, जल्पति, पिबति, निमिषति च"। अतो नान्तरीयकत्वाद् हासादिक्रियाणां न भेदकत्वम्। किञ्च, हासादीनामपि फलानुकूलत्वाद् भुजधात्वर्थत्वेन न कश्चिद् दोषः। तदुक्तं हरिणा—

> व्यवधानमिवोपैति निवृत्त इव दृश्यते।
> क्रियासमूहो भुज्यादिरन्तरालप्रवृत्तिभिः॥
> न च विच्छिन्नरूपोऽपि सोऽविरामान्निवर्तते।
> सर्वैव हि क्रियाऽन्येन संकीर्णेवोपलक्ष्यते॥
> तदन्तरालदृष्टा वा सर्वैषाऽवयवक्रिया।
> सादृश्यात् सति भेदे तु तदङ्गत्वेन गृह्यते॥ इति।

अतः प्रारब्धापरिसमाप्तक्रियाधिकरणसमयत्वमेव वर्तमानत्वम्। एवं विद्यमानध्वंसप्रतियोगिसमयत्वमेव भूतत्वम्। वर्तमानप्रागभावप्रतियोगिसमयत्वं भविष्यत्त्वम्। एवं पर्वतास्तिष्ठन्ति, स्थास्यन्ति पर्वताः, तस्थुः पर्वताः—एतेष्वपि कालविभागा वर्तन्त एव। इह हि भूतभविष्यद्वर्तमानानां राज्ञां क्रियास्तिष्ठतेरधिकरणम्। इह तावत्तिष्ठन्ति पर्वता इति, सम्प्रति ये राजानस्तेषां याः क्रियास्तासु वर्तमानासु। स्थास्यन्ति पर्वता इति, इत उत्तरं ये राजानो भविष्यन्ति तेषां याः क्रियास्तासु भविष्यन्तीषु। तस्थुः पर्वता इति, इह हि ये राजानो बभूवुस्तेषां याः क्रियास्तास्वतिक्रान्तासु। अयं भावः—यद्यपि पर्वतादेः स्थितिरूपा व्यापाराः सदृशावयवत्वाद् दुरवधारभेदा इति तत्र कालभेदाभावस्तथापि राजक्रिया विसदृशसन्तानतयाऽवधृतभेदा इति सहचारिणीभिस्ताभिः पर्वतादिस्थितिर्भिद्यते। तत्र क्रियापदस्य तत्परिच्छेदककालपरत्वेन तदीयकालस्य पर्वतादिस्थितावात्मादिनित्यपदार्थसत्तायां चारोपो बोध्यः। तदुक्तं भर्तृहरिणा—

परतो भिद्यते सर्वमात्मा तु न विकम्पते ।
पर्वतादिस्थितिस्तस्मात् पररूपेण भिद्यते ॥
प्रसिद्धभेदा व्यापारा विरूपावयवक्रियाः ।
साहचर्येण भिद्यन्ते सरूपावयवक्रियाः ॥ इति ।

अत्र केचिदेवं वदन्ति—वर्तमानकालस्याभावात् कथं वर्तमाने काले लङ् विधीयते । तत्र भाष्ये श्लोका एते पठ्यन्ते । तत्र प्रथमः श्लोकः—

न वर्तते चक्रमिषुर्न पात्यते न स्यन्दन्ते सरितः सागराय ।
कूटस्थोऽयं लोको न विचेष्टिताऽस्ति यो ह्येवं पश्यति सोऽप्यनन्धः ॥ इति ।

अस्यायं भावः—चक्रं वर्तते, इषुः पात्यते, सरितः स्यन्दन्त इत्यादिप्रयोगा न सम्भवन्ति, वर्तमानक्रियाश्रयत्वाभावात् । तथाहि—सर्वेषां लोकानां नश्वरत्वात् क्षणिकत्वाच्च कूटस्थत्वेन स्वरूपस्थत्वेन क्रियाश्रयत्वाभावान्न कश्चिद्विचेष्टिता व्यापाराणां कर्ताऽस्ति । एवं यो वेत्ति सोऽप्यनन्धो योगितुल्यः किं पुनरविकृतमात्मतत्त्वं भावयन् योगीत्यर्थः ।

अपरौ द्वौ श्लोकौ—

मीमांसको मन्यमानो युवा मेधाविसंमतः ।
काकं स्नेहेन पृच्छति किं ते पतितलक्षणम् ॥
अनागते न पतसि अतिक्रान्ते च काक न ।
यदि सम्प्रति पतसि सर्वो लोको पतत्ययम् ॥ इति ।

अनयोरयमाशयः—काकः पततीति प्रयोगे वर्तमानकालस्यानुपपत्तिं दृष्ट्वा मीमांसको विचारवान् युवा प्रज्ञापटुर्मेधाविसंमतो बुद्धिमान् सर्वैः सम्मतश्च पृच्छति काकम्—ते पतनक्रियायां वर्तमानत्वाभावाद् लोकानां प्रयोगोऽनुपपन्नः, निष्पन्नस्यार्थस्य भूतत्वाद् अनिष्पन्नस्यार्थस्य भावित्वाद् उभयोर्व्यतिरेकेणान्यस्याभावात् । यदि क्रियाया वर्तमानत्वाभावेऽपि प्रयोगस्तदा सर्वोऽयं लोकः पतति । अर्थात् सर्वत्रैव वर्तमानकालिकीं कामपि क्रियामाश्रित्य प्रयोगे हि भवानपि गच्छतीति प्रयोगो व्यवहारविषयः स्यात् । अन्योऽयं श्लोकः—

अनागतमतिक्रान्तं वर्तमानमिति त्रयम् ।
सर्वत्र च गतिर्नास्ति गच्छतीति किमुच्यते ॥ इति ।

## लकारार्थविचारः

अयं भावः—एकस्यैव क्षणस्योपलम्भयोग्यत्वाद् अन्येषां केषाञ्चिद् भूतत्वात् केषाञ्चिच्च भावित्वाद् एकक्षणवर्ती पदार्थगतः क्रियांशो ज्ञानयोग्यो न सम्भवति। अतः सर्वथा वर्तमानकालिकी गतिर्नास्ति, तेन गच्छतीति प्रयोगोऽनुपपन्नः। इत्थमनुपपत्तिं प्रदर्श्य समाधानायोपन्यस्तोऽयं श्लोकः—

क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद्विचेष्टितम्।
तत्समीक्ष्य प्रयुञ्जीत गच्छतीत्यविचारयन्॥ इति।

सर्वो हि लोकः फलप्राप्तये क्रियायां प्रवर्तते। अत उत्तरदेशसंयोगाद्यर्थं यो व्यापारः समुपजायते तमेवाभिलक्ष्यीकृत्य लोकैरविचारयद्भिर्गच्छतीति प्रयुज्यते। तथाहि—फलेन तत्कारणीभूतां क्रियामनुमाय प्रत्यभिज्ञया क्षणिकत्वे निराकृते तादृशव्यापाराणामेकबुद्धिविषयतयैकत्वे कल्पिते वर्तमानत्वं तस्यानिर्बाधमेव। "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति वैकल्पिक एव बौद्धः समूहो यमादाय तादृशप्रयोगाणामुपपत्तिः। तत्राविचारयन्नित्यस्य कुविकल्पकलङ्करहितमित्यर्थं कैयट आह। बौद्धार्थमादाय विकल्पज्ञानेन सर्वासां शङ्कानां समाधाने जातेऽप्यपर आहेत्यादिना समाधानान्तरम्—अस्ति वर्तमानः काल इति। किन्तु प्रत्यक्षेणादित्यगतिवन्नोपलभ्यते। क्रियाप्रत्यक्षत्वाभिमानिनो यथाऽतिदूरत्ववशादादित्यगतिरनुमेया, तथाऽतिसूक्ष्मकालावच्छिन्नत्वादेकैकक्षणावच्छिन्ना क्रियाऽप्यनुमेयैव। तत्रैवानुमाने दृष्टान्तप्रदर्शनार्थमयं श्लोकः—

बिसस्य बाला इव दह्यमाना न लक्ष्यते विकृतिः सन्निपाते।
अस्तीति तां वेदयन्ते त्रिभावाः सूक्ष्मो हि भावोऽनुमितेन गम्यः॥

बिसदाहे बालदाहवत् कारकसन्निपाते विकृतिः क्रियैवेका लक्ष्यते न प्रत्यक्षेण गृह्यते। परन्तु त्रिभावास्त्रिषु कालेषु भावो भावना येषां ते त्रिकालज्ञा योगिनोऽस्तीति तां वेदयन्ते जानन्ति। ननु तेषां ज्ञानेऽपि कथमस्मदादीनां व्यवहारोऽत आह—सूक्ष्मो हि भावोऽनुमितेन गम्यस्तेषां व्यवहारेणास्मदादिभिरनुमाय ज्ञायते, अस्ति वर्तमानः कालः। अनेकक्षणसमूहस्यापि धातुवाच्यस्य क्रमेणैव वर्तनाद् आनुमानिक्येव क्रिया तत्परिच्छिन्नः कालश्चेति बोध्यम्।

एवं वर्तमानसामीप्येऽपि लड् विधीयते। तत्र किं नाम वर्तमानसामीप्यम्? वर्तमानकालानन्तरं यावत् क्षणं वर्तमानस्य संस्कारो भूतकालेऽप्यनुवर्तते तावद् भूतकालविषयम्। एवं फलजनकभविष्यत्क्रियाविषयो यः संकल्पो मानसो वर्तमानस्तद्भविष्यत्क्रियाविषयं वर्तमानसामीप्यं तस्मिन् कालेऽपि वर्तमानवत् प्रत्यया भवन्ति। अतस्तत्रापि लड्विधानाय सूत्रं भगवता संपादितम्।

तदुक्तं भर्तृहरिणा—

अध्वनो वर्तमानस्य यः शेषो य उपक्रमः।
तद् वर्तमानसामीप्यं शास्त्रे भेदेन दर्शितम्॥ इति।

वस्तुतस्तु वर्तमानकाले विहितेन लडादिना पदसंस्कारे क्रियमाणे पश्चाद् वाक्ये पदान्तरसंबन्धात् तत्सामीप्ये प्रतीयमाने भूतभविष्यतोरपि वर्तमानत्वारोपेण सिद्धौ सूत्रं विनाऽप्युक्तप्रयोगोपपत्तिः। एवं वसन् ददर्शेत्यादौ भूतकालेऽपि लड्लकारे जाते तस्य स्थाने शत्रादेशे वसन् इत्यस्य सिद्धिः, 'धातुसंबन्धे प्रत्ययाः' इति सूत्रेण धातूनामर्थद्वारा परस्परसंबन्धे यत्र काले प्रत्यया विहितास्ततोऽन्यस्मिन्नपि काले तेषां विधानात्। एवञ्च साक्षाद्धात्वर्थानां सम्बन्धस्योक्तप्रयोगेष्वभावात् कारकद्वारा संबन्धो बोध्यः। अत एव भाव्यासीत् सोमयाज्यस्य पुत्रो भवितेत्यादिप्रयोगाणां संगतिरुपपद्यते। 'प्रत्ययः' इत्यधिकारादेव तद्विधानलाभे पुनः प्रत्ययग्रहणादधात्वधिकारविहितानां प्रत्ययानामपि ग्रहणम्। तेन गोमानासीत्, गोमान् भवितेत्यादयः प्रयोगा अप्युपपन्नाः, वर्तमानकालस्थसत्तारूपोपाधौ मतुपो विधानेऽपि भूतभविष्यत्कालस्थसत्तोपाधावविधानात्।

वस्तुतः सूत्राभावेऽपि वसन् भाव्यादिशब्देषु स्वे स्वे काले प्रत्ययानां विधानेन तत्तत्पदानां संस्कारे जाते पश्चाद्वाक्यार्थवशाद् विशेष्यकालानुवृत्त्या सर्वं सिद्ध्यति। सत्यामप्येकवाक्यताबलाद् विशिष्टकालावगतौ पदसंस्कारवेलायां तदभावादुक्तप्रयोगाणां साधुत्वमाञ्जस्येनोपपद्यते। तदुक्तं भर्तृहरिणा—

स्वकाल एव साधुश्चेत् कालभेदे गतिः कथम्।
वाक्यार्थादतदर्थेषु विशिष्टत्वं न सिद्ध्यति॥ इति।

किञ्च, सूत्रारम्भे भाव्यासीत् सोमयाज्यस्य पुत्रो भवितेत्यादौ तत्तत्प्रत्ययानां तत्तद्वाक्यगतविशेष्यपदेन प्रतीयमानकाले विधानेन सर्वथा विशेष्यगतकालस्यैव प्रतीतिः स्यात्, न त्वभीष्टस्य कालस्य। उक्तरीत्या स्वे स्वे काले विहितप्रत्यायाभ्यां पृथक् पदसंस्कारे जाते पश्चादेकवाक्यस्थत्वेन परस्परसंबन्धमाहात्म्याद् भूतभविष्यत्कालमिश्रितस्य प्रतिपिपादयिषितस्याभीष्टकालस्य प्रतीयमानत्वात् सम्प्रति वर्तमानकालप्रतीतिः। यतस्त्रैयध्विकाः पदार्थाः सन्ति, अतो भविष्यदध्वनोऽतीताध्वप्रवेशो न्याय्यः। तथोक्तं व्यासेन—

अवश्यं भाविनं नाशं भावित्वाद् विध्युपस्थितम्।
अयमेव हि ते कालः पूर्वमासीदनागतैः॥ इति।

## लकारार्थविचारः

वाक्यार्थवशात् कालान्तरावगतावपि स्वकालमाश्रित्य जायमाने पदसंस्कारे स्वकालतायाः पश्चादपि न परित्यागः । तदुक्तं वाक्यपदीये—

विशिष्टकालतापूर्वं तथापि तु विशेषणे ।
आश्रयात् सोऽन्तरङ्गत्वात् तत्र साधुर्भविष्यति ॥ इति ।

केचित्तु वाक्यपदाभ्यां पार्थक्येन प्रतीयमानतत्तत्कालव्यामिश्रकाल एव वाक्यात् प्रतीयमाने 'धातुसंबन्धे प्रत्ययाः' इति सूत्रेण प्रत्यया विधीयन्ते । अन्यथा केवलस्य विमिश्रत्वं शब्दार्थनित्यतावादिमते कथमपि न संगच्छेत । किञ्चैवमन्विताभिधानवादिमते आपतिता दोषाः प्रसज्येरन् । तथा चोक्तम्—

सामान्यार्थस्तिरोभूतो न विशेषेऽवतिष्ठते ।
उपात्तस्य कुतस्त्यागो निवृत्तः क्वावतिष्ठताम् ॥ इति ।

अतो व्यामिश्रकाले प्रत्ययानां विधायकमिदं सूत्रमिति मन्तव्यम् । नन्वेवं यथा भाव्यासीदित्यत्र भविष्यत्कालव्यामिश्रभूतकाले भविष्यत्कालविहितस्य णिनो विधानम्, एवं भूतकालव्यामिश्रभविष्यत्काले भूतार्थप्रत्यायानामपि विधानं स्यादिति चेन्न; आख्यातपदवाच्यार्थस्य प्रधानतया न तत्र व्यामिश्रकालिकप्रत्ययानां विधानम्, किन्तु विशेषणवाचकपदादेवेति स्वीकारेणादोषात् । तदुक्तं भर्तृहरिणा—

शुद्धे च काले व्याख्यातमामिश्रे न प्रसिद्ध्यति ।
साधुत्वमयथाकालं तत्सूत्रेणोपदिश्यते ॥
आख्यातपदवाच्येऽर्थे निर्वर्त्यत्वात् प्रधानता ।
विशेषणं तदाक्षेपात् तत्कालेष्ववतिष्ठते ॥ इति ।

वस्तुतः सन्नेवार्थः शास्त्रेण प्रतिपाद्यते, न त्वसतोऽर्थस्य प्रादुर्भावः क्रियते । नहि शास्त्रसहस्रेणापि घटं पटयितुमीष्टे कश्चित् । अत उक्तसूत्रेण कालान्तरे प्रत्ययविधानेऽपि तैः प्रत्ययैस्तदर्थस्याभिधातुमशक्यतया सूत्रमनावश्यकमेव, सूत्रे सत्यप्युक्तप्रयोगाणामनुपपत्तेः । किन्तु स्वे स्वे काल एव प्रत्ययानां णिन्यादीनां विधानेन भूतकालविशिष्टार्थप्रतीतावपि जनितेत्येतत्पदान्तरसंबन्धे भूतकालावच्छिन्नो ज्ञानाकारो भविष्यति कालेऽध्यस्यते । तथा चायमर्थः—सोऽस्य पुत्रो जनिता योऽग्निष्टोमेन यष्टेति । अथवाऽग्निष्टोमयाजीत्यस्य व्यापारः स्वार्थाभिधानलक्षणो भविष्यति कालेऽध्यस्यते । यथा भूतं भविष्यद् इत्येते ज्ञाने उत्पद्यमाने स्वतो वर्तमानेऽपि विषययोः

स्वकालविरुद्धभूतभविष्यतोराकारं धारयतः। एवमेव स्वकालापरित्यागेनापि कालान्तरेऽत्रारोपः। तदुक्तं भर्तृहरिणा—

सम्प्रत्ययानुकारो वा शब्दव्यापार एव वा।
अध्यस्यते विरुद्धेऽर्थे न च तेन विरुध्यते॥
भूतं भविष्यदित्येतौ प्रत्ययौ वर्तमानताम्।
अत्यजन्तौ प्रपद्येते विरुद्धाश्रयरूपताम्॥ इति।

तत्र कालोऽद्यतनानद्यतनभेदेन द्विविध इत्युक्तं पुरस्तात्। अद्यतनो नामातीताया रात्रेः पश्चार्धेनागामिन्याः पूर्वार्धेन च सहितो दिवस इति कालोपसर्जने च तुल्यमिति सूत्रे भाष्ये। लुङ् इति सूत्रस्थकैयटे त्वेकस्या रात्रेश्चतुर्थो भागो दिवसश्च सर्वो द्वितीयायाश्च रात्रेः प्रथमो भागोऽद्यतन इत्युक्तम्। अद्यतनाद्भिन्नोऽनद्यतनः। तत्रानद्यतने भूते परोक्षे लिड् लकारो भवति। तत्र भूतत्वं भविष्यत्त्वं चोक्तमेव। परोक्षं नाम इन्द्रियजन्यज्ञानाविषयः, अक्ष्णः परं परोक्षमिति व्युत्पत्तेः, अक्षिशब्दस्येन्द्रियसामान्यपरत्वात्।

अथ कस्य परोक्षत्वे लिड् इति जिज्ञासायां कालस्येत्युक्तिर्न संभवति, कालाधिकाराभावात्। किञ्च, कालस्येदानीमित्यादिव्यवहारविषयत्वेन प्रत्यक्षत्वान्नापरोक्षत्वं घटते। अतो धातोरित्यधिकारात् तस्य च शब्दरूपत्वेन श्रोत्रविषयत्वेन प्रत्यक्षत्वात् तदर्थस्य क्रियारूपस्य परोक्षत्वमेव विवक्षितम्। तत्र क्रिया नामेयमत्यन्तापरिदृष्टाऽनुमानगम्या पिण्डीभूता न शक्या निर्वर्तयितुम्। यथा गर्भो निर्लुठितः। अतस्तस्याः सर्वथा परोक्षत्वेन परोक्ष इति विशेषणं न सम्भवति। अतः क्रियायाः साधनानां कारकाणामेव पारोक्ष्यं विवक्ष्यते। तत्रापि शक्तिः कारकमिति मते सैव दुरवस्था। तेन शक्तिमतः कारकस्यैव क्रियाकृतविशेषाणां सीत्कारादीनाञ्च पारोक्ष्यं विवक्षितमिति न कुत्रापि दोषः।

तत्र परोक्षे लिडिति सूत्रे भाष्ये परोक्षं मतभेदेन प्रदर्शितम्—१. वर्षशतवृत्तं परोक्षम्, २. वर्षसहस्रवृत्तं परोक्षम्, ३. कुड्यकटान्तरितं परोक्षम्, ४. द्व्यहवृत्तं परोक्षम्, ५. त्र्यहवृत्तं परोक्षमिति। तत्रोत्तमपुरुषे चित्तविक्षेपादिनैव परोक्षत्वमादाय लिड् लकार इति वैयाकरणभूषणसारकृतामाशयः। अन्येषां वैयाकरणसिद्धान्तप्रवर्तकानामाचार्याणां मते मनःसंयोगाभावाद् इन्द्रियार्थसन्निकर्षे सत्यपि परोक्षत्वमेव। यथा वैयाकरणानां शाकटायनो रथमार्गे आसीनः शकटसार्थं यान्तं नोपलेभे। तत्र यद्यपि वैयाकरणानां मतेऽन्तःकरणं विभ्विति तत्संयोगाभावोऽसिद्धस्तथापि तत्परिणामविशेषस्य मनसो ज्ञानकारणत्वेन तस्य च संकोचविकासशालित्वेन न दोषः।

## लकारार्थविचारः

तत्र भूतसामान्ये लुङ्। अनद्यतने भूते लङ्। तत्रानद्यतने इत्यत्र बहुव्रीहिः। नाद्यतनः कालो यस्मिन्नसावनद्यतनः। अतो व्यामिश्रे काले लुङेव यथाऽद्य ह्योऽभुङ्क्ष्महि। व्यपदेशिवद्भावे नाद्यतनेऽप्यद्यतनस्य विद्यमानत्वाद् न तत्र लङ् लकारः। परोक्षेऽपि लोकविज्ञाते दर्शनविषये लङेव भवति। एवमनद्यतनभूतेऽपि भूतत्वमात्रविवक्षायां लुङेव। यथा ह्योऽपाक्षी-दित्यत्र पूर्वं भूतत्वमात्रविवक्षायां लुङि पश्चाद् ह्यःपदेनानद्यतनत्वप्रतीतिः, एवं भविष्यत्सामान्ये लृट्। अनद्यतने भविष्यति लुट्। तत्रापि भविष्यत्वमात्रविवक्षायामनद्यतनेऽपि लृडेव, यथा श्वः पक्ष्यतीति। एवमियं कदा नु गन्ता येयं पादौ निदधातीत्यत्राद्यतनेऽप्यनद्यतनत्वारोपेण लुट्। तत्रारोपफलं विलम्बेन गतिप्रत्यायनम्।

'देवश्चेद् वृष्टः सम्पन्नाः शालयः' इत्यत्र संपद्धातोरपशालिबीजसंयोगोऽर्थः। अथवा मेघोत्पत्तिरूपकारणगतं भूतत्वं कार्ये वृष्टौ शालिसम्पत्तौ चारोप्य भूतकाले क्तप्रत्ययो विधीयते। आरोपफलं कारणान्तराऽपेक्षाभावप्रतिपादनद्वारेणावश्यम्भाविप्रतीतिः। एवमेव ग्रामान्तरं जिगमिषवो जनाः कुत्रचित् स्थाने कूपसत्तानिश्चयवन्तस्तत्प्राप्तिगतभावित्वं भूतत्वञ्च कूपे आरोप्य कूपो भविष्यति, कूपोऽभूद् इत्यादिप्रयोगान् विदधति। एवं "व्यातेने किरणावलीमुदयनः" इत्यादौ भूतत्वानद्यतनत्वपरोक्षत्वानामारोपो बोध्यः। तत्फलं ग्रन्थेऽतिसुकरत्वशीघ्रनिष्पाद्यत्वप्रति-पादनम्।

'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इति सूत्रेण भविष्यति लिङ्निमित्ते सति क्रियातिपत्तौ गम्यमानायां लृङ् विधीयते। तत्र क्रियातिपत्तिर्नाम क्रियाया अत्यन्तमनि-ष्पत्तिः। यथा सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्। अत्र साधनवैकल्यात् सुवृष्टिभवनयो-रनुत्पत्तिः प्रतिपाद्यते। तत्र समर्थसाधने सम्भावितोत्पत्तिश्च भविष्यद्व्यवहारास्पदम्। अत्र साधनाभावात् कार्याभावेन कथमुक्तप्रयोग इत्याशङ्कायां साधनाभावादभविष्यत्यपि भविष्यत्त्वमारोप्य तथाप्रयोगो गत्यन्तराभावादेव स्वीकरणीयः। एवं भूतेऽपि लृङः प्रयोग आरोपादेव भवतीति सर्वमवदातम्। तत्र तत्तत्सूत्रेण कालत्रयेऽपि लिङो विधानात् त्रिष्वपि कालेषु लृङः प्रयोगो भवति। विशेषतस्तु भूते भविष्यति च तत्राप्याधिक्येन भविष्यत्येव।

तत्र यद्यप्यर्हादयोऽनेकेऽर्था लिङ्लकारस्य, तथापि विशेषेण विध्यादिष्वेव विधानेन लोके प्रयोगाच्च प्रधानतया त एवार्थाः। 'लोट् च' 'लिङर्थे लेट्' इति सूत्राभ्यां लेङ्लोटोरपि तेष्वेवार्थेषु विधानात् त एवार्थास्तयोरपि। तत्र विधिः स्वापेक्षया निकृष्टस्य भृत्या स्वाभिलषितेऽर्थे प्रवर्तनम्। इयमेवाज्ञा। एवं 'स्वर्गकामो यजेत' इत्यादावप्रवृत्तप्रयोज्यस्य तदभिलषिताज्ञातोपाय-

प्रदर्शनोपदेशोऽपि विधिरेव। निमन्त्रणम्=नियोगकरणम्, आवश्यकश्राद्धभोजनादौ स्वाभिलषिते प्रवर्तनम्। आमन्त्रणं स्वाभिलषिते कामचारेण प्रवर्त्य प्रवर्तनम्। कामचारश्च प्रवर्त्यस्य। एषैव कामचारानुज्ञा। अधीष्टः सत्कारपूर्वको व्यापारः। यथा माणवकमध्यापय। एषैवाभ्यर्थना। प्रार्थना तु स्वाभिलषितदानादिप्रवर्तिकोक्तिः। एषु सर्वेष्वर्थेषु प्रवर्तनासामान्यस्यानुस्यूतत्वात् प्रवर्तनासामान्यं लिङर्थः। तदुक्तं भर्तृहरिणा—

> अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि।
> तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया॥
> न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा।
> विध्यादीनामुपादानं चतुर्णामादितः कृतम्॥ इति।

प्रवर्तनात्वञ्च प्रवृत्तिप्रयोजकज्ञानविषयतावच्छेदकत्वम्। सर्वो हि जनो ममेदमिष्टसाधनमिति ज्ञानादेव प्रवर्तते। अतस्तादृशज्ञानविषयो यागादिस्तदवच्छेदकत्वमिष्टसाधनत्वस्येति तदेव विध्यर्थः। इष्टत्वञ्च समभिव्याहृतपदोपस्थापितकामनाविषयत्वम्। तच्च स्वर्गकामादिपदोपस्थापितस्वर्गादावक्षतम्। इष्टत्वेन स्वर्गादीननुगमय्य तत्साधनतया विध्यर्थत्वम्। तच्चेष्टत्वम् उपलक्षणतयाऽनुगमकम्। अतः स्वर्गादीनामिष्टानां स्वर्गत्वादिनैव भानम्। अतो न नानार्थत्वं लिङादीनाम्। तदुक्तं मण्डनमिश्रैः—

> पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः।
> प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्तनाम्॥ इति।

यद्यपीष्टसाधनेऽपि चन्द्रमण्डलानयने, बलवदनिष्टाननुबन्धिनि साध्ये निष्पन्ने, तृप्तिरूपेष्टसाधने कृतिसाध्यमधुविषसंपृक्तान्नभोजने च प्रवृत्त्यदर्शनात् प्रवर्तकज्ञानविषयतावच्छेदेन कृतिसाध्यत्वस्य, बलवदनिष्टाननुबन्धित्वस्य च विध्यर्थत्वं वाच्यम्; तथापि कृत्यसाध्ये वस्तुनि वृथा श्रमजनकतयेष्टजनकत्वाभावज्ञानेन द्वेषात् प्रतिबन्धकसद्भावेनाप्रवृत्तिः। एवमेव बलवदनिष्टानुबन्धिनि मधुविषसंपृक्तान्नभोजनादावनिष्टोत्पादकत्वेन द्वेषात् प्रतिबन्धकसद्भावेन न प्रवृत्तिः। किञ्चास्तिककामुकस्य परस्त्रीगमने बलवदनिष्टनरकाद्यनुबन्धित्वेऽपि रागौत्कट्यादिना प्रवृत्तिदर्शनेन व्यभिचार इति वैयाकरणभूषणसारकृतां कौण्डभट्टानां मतम्।

न्यायनये कृतिसाध्यत्वे सति बलवदनिष्टाननुबन्धित्वे सति इष्टसाधनताज्ञानं विध्यर्थः। अत एव तृप्तस्य पुनर्भोजने, चन्द्रमण्डलानयनादौ, मधुविषसंपृक्तान्नभोजनादौ च न प्रवृत्तिः।

## लकारार्थविचारः

तत्र केषाञ्चिन्मते पुष्पवन्तपदादेकयैव शक्त्या चन्द्रसूर्ययोरुभयोरिव लिङैकयैव शक्त्या त्रयाणामप्यर्थानां बोधः । अन्येषां तु त्रिष्वर्थेषु तिस्रः शक्तयः । तत्र त्रयाणामप्यर्थानां धात्वर्थ एवान्वयः ।

प्राभाकरास्तु स्वविशेषणवत्ताज्ञानजन्यकार्यताज्ञानस्यैव प्रवर्तकत्वं स्वीकुर्वन्ति, त्रयाणां कारणत्वकल्पनायां कार्यकारणभावत्रयकल्पनायां गौरवात् । कार्यताज्ञानं द्विविधम् । तत्र पदार्थनिष्ठयोग्यताज्ञानजन्यं मयेदं कर्तुं शक्यमित्येकम् । स्वेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वज्ञानजन्यं ममेदमवश्यं कार्यमिति द्वितीयम् । इदमेव स्वविशेषणवत्ताप्रतिसन्धानजन्यम् । स्वं नियोज्यस्तद्विशेषणं काम्ये फलकामना, नित्ये शुचितत्कालजीवित्वादि । अतः स्वेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वज्ञानजन्यकार्यताज्ञानं चिकीर्षाद्वारा प्रवर्तकमिति सिद्धयति । अत एव भावियौवराज्ये, तृप्तस्य पुनर्भोजने च न प्रवृत्तिः, स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानाभावात् । शाब्दबोधे तात्पर्यज्ञानस्येव प्रवृत्तौ कार्यताज्ञानस्य लाघवेन हेतुत्वात् । तद्धेतुप्रकरणादीनां शाब्दबोधहेतुत्वाभाववत् कार्यताज्ञानजनकेष्टसाधनत्वादीनामपि तद्धेतुत्वकल्पनायोगात् ।

एवञ्च कार्यत्वमेव विध्यर्थः । तृप्तिकामः पचेदित्यस्य तृप्तिकामनियोज्यकपाकः कार्य इत्यर्थः । एवं 'शुचिः सन्ध्यामुपासीत' इत्यादिवैदिकविधौ वेदाधीनकार्यताज्ञानाद् योग्यता, तथा च शुचिनियोज्यकं सन्ध्यावन्दनादिकं कार्यमिति बोधः । स्वर्गकामो यजेतेत्यत्र तत्कामनाविषयसाधनत्वस्य योग्यतात्वात् स्वर्गकामपदैकवाक्यतानिर्वाहकप्रतीत्यनुपपत्त्या कामनाविशिष्टमपूर्वं वाच्यं सिद्धयति । अतो यागे कार्यत्वान्वये नियोज्यान्वयो योग्यता । तत्रेष्टसाधनत्वेन ज्ञायमानत्वं योग्यता, स्वर्गसाधनत्वस्य योग्यत्वाभावात् । एवञ्चापूर्वस्य प्रागनुपस्थित्या तेन रूपेण ज्ञानाभावेऽपि कार्यत्वेन रूपेण तस्य काम्यसाधनत्वज्ञानसम्भवेन योग्यतया नियोज्यान्वयः ।

प्रवृत्तिजनकशाब्दबोधक्रमस्तु नियोज्यस्वर्गकामीयं यागविषयकं स्वर्गसाधनं स्थायिकार्यं ममेति प्रथमो बोधः । नियोज्यस्वर्गकामीयो यागः साध्य इति द्वितीयः । नियोज्यस्वर्गकामः स्वनियोज्यस्वर्गसाधनत्वेन ज्ञायमानकार्यो यागानुकूलव्यापारवानिति तृतीयः । स्वर्गकामो यागजन्यफलभागिति चतुर्थः । मत्कृतिसाध्यो यागोऽहञ्च कर्ताऽधिकारी चेति पञ्चमः । विवरणकारमते प्रथमतो बोधत्रयेणैव प्रवृत्तिसिद्धिः । निबन्धकारमते बोधद्वयोत्तरमहं स्वर्गकामः कर्ता भोक्ता चेति बोधात् प्रवृत्तिः । तदुक्तं गागाभट्टकृतभाट्टचिन्तामणौ—

> इदं गुरुमतं तु मद्विहितसूत्रवृत्तौ मया विचार्य कुसुमाञ्जलौ बहु च दूषितं भूषितम् ।
> अपेक्षितमथाप्युपेक्षितमिदं कठोरत्वतः शिशुप्रतिबिबोधनार्थकृतभाट्टचिन्तामणौ ॥ इति ।

भाट्टमते तु लिङादिशब्दनिष्ठा प्रवर्तना विध्यर्थः। प्रवृत्तिश्च द्वेधा—स्वेच्छाधीना, पराधीना च। तत्राद्यायामिष्टसाधनत्वधीः कारणम्। अन्यायां राजगुर्वादेराज्ञाप्रेरणादिधीः, अनिच्छन्तमपि राजा मां प्रवर्तयतीत्यनुभवात्। प्रवर्तना च प्रवर्तयितुः परप्रवृत्त्यनुकूलव्यापारविशेषः। स च चेतनस्य राजादेराज्ञादिः। वेदे तु वक्तुरभावादचेतनस्य वेदस्याभिधानात्मकः कश्चिच्छब्दसमवेतोऽलौकिको व्यापारः। स च शब्दनिष्ठत्वाच्छब्दव्यापारत्वाच्च शाब्दी भावनेत्युच्यते। तस्याः प्रवर्तनात्वेन ज्ञानं तद्विषयकशक्तिग्रहश्च प्रयोज्यप्रयोजकवृद्धव्यवहारादेव। तत्रापि वृद्धव्यवहारे वाक्यात् तादृशे ज्ञाने जातेऽन्यावापोद्वापाभ्यां पदानां लिङंशे शक्तिः सिद्ध्यति। तदुक्तम्—

अभिधा भावनामाहुरन्यामेव लिङादयः।
अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः॥

सा च शाब्दी भावनांशत्रयमपेक्षते। तदाहुः—

लिङोऽभिधा सैव च शब्दभावना वाच्या च तस्याः पुरुषप्रवृत्तिः।
संबन्धबोधः करणं तदीयप्ररोचना चाङ्गतयोपयुज्यते॥ इति।

सा चेयं शाब्दी भावनांशत्रयवती, किं केन कथमिति त्रिविधाया आकाङ्क्षाया जननात्। तत्र किमित्याकाङ्क्षायामार्थी भावना भाव्यत्वेन, केनेत्याकाङ्क्षायां लिङ्ज्ञानं करणत्वेन, कथमित्याकाङ्क्षायामार्थवादिकं प्राशस्त्यज्ञानमितिकर्तव्यत्वेन संबध्यन्ते। एवमार्थी भावनाऽप्यंशत्रयवती। तत्र किमित्याकाङ्क्षायां स्वर्गकामस्य भाव्यत्वमुच्यमानं विशेष्यबाधे विशेषणे पर्यवस्यति। अश्रुतफले विधौ विश्वजिन्न्यायेन स्वर्गादिकं कल्प्यते। करणाकाङ्क्षायां धात्वर्थः करणत्वेन संबध्यते। कथमित्याकाङ्क्षायामङ्गजातमितिकर्तव्यतयाऽन्वेति। तत्र ज्योतिष्टोमेन यजेतेत्यादौ ज्योतिष्टोमादिनामधेयानां यागविशेषणतयाऽभेदेनान्वयः। तत्र यागस्याशुविनाशित्वात् स्वर्गोत्पत्तिकालेऽविद्यमानत्वात् कार्याव्यवहितप्राक्कालेऽविद्यमानत्वेन कारणत्वानुपपत्त्या स्वर्गस्य यागभाव्यत्वं न स्यात्, अतो मध्येऽपूर्वं यागव्यापारतया कल्प्यते। तथा चैवं भट्टमते बोधप्रकारः—स्वर्गकामनिष्ठा यागकरणिका स्वर्गफलिका प्रयाजादीतिकर्तव्यताका आर्थी भावना, एवं विधिनिष्ठशक्तिग्रहकरणिका स्तुत्यर्थवादोपकृता आर्थीभावनाफलिका प्रवर्तनेत्येवं पृथग्बोधे जाते निरुक्ता आर्थीभावना निरुक्तप्रवर्तनाया विषय इति महावाक्यार्थबोधः। अत एव विध्युपरक्तो लिङर्थ इति भाट्टसिद्धान्तः।

नागेशमते प्रवर्तना प्रवृत्त्यनुकूलो व्यापारः प्रवर्तकनिष्ठो लिङादिशब्दप्रयोगरूपः। प्रवर्तकत्वञ्च स्वातन्त्र्ये सति लिङाद्युच्चारयितृत्वम्। राजप्रेरितपदातेर्लिङाद्युच्चारयितृत्वेऽपि प्रवर्तकत्वव्यवहारवारणाय स्वातन्त्र्ये सतीति। वेदे प्रवर्तना लिङ्घटितत्वरूपा। प्रवर्तकत्वं शब्दनिष्ठमेव।

## लकारार्थविचारः

तत्राप्तोक्तया प्रवर्तनया प्रतिबन्धकाभावविशिष्टया स्वे विषये इष्टसाधनत्वाक्षेपो भवति, ततश्च प्रवृत्तिः। आप्तत्वं च भ्रमादिदोषरहितत्वे सति तत्तत्क्रियाविषये स्वेष्टप्रतिबन्धानिष्टोत्पत्त्युभयानुकूलयत्नाभाववत्त्वम्। अत एव वनेऽपहृतसर्वस्वानां कृते दस्यूनामपि मार्गोपदेशे आप्तत्वं भवत्येव।

जीवन्मुक्तस्यापि प्रार्थनया कारुण्येन वा परं प्रति ब्रह्मोपदेशे इष्टसाधनत्वाभावेन प्रवृत्तौ व्यभिचारेऽपि 'सर्वे इमे स्वभूत्यर्थं प्रवर्तन्ते' इति हेतुमति चेति सूत्रभाष्यात् तदतिरिक्तप्रवृत्तौ तत्प्रयोज्यत्वनियमस्य स्वीकर्तव्यतया तत्रापीष्टसाधनत्वाक्षेपो बोध्यः।

आप्तोक्तयेति विशेषणेन शत्रुप्रयुक्ताद् विषं भुङ्क्ष्वेति वाक्यान्नेष्टसाधनत्वाक्षेपो नापि प्रवृत्तिः। एवं विषं भुङ्क्ष्व माऽस्य गृहे भुक्त्था इति वाक्यादपि न प्रवृत्तिः, द्वेषरूपस्य प्रतिबन्धकस्यैव सत्त्वात्। तत्रेष्टसाधनत्वाक्षेपः क्वचित् सामान्यरूपेणेष्टत्वेनैवोपस्थितमिष्टमादाय, यथा गुर्वादिप्रवर्तनया प्रवृत्तौ। बहुवित्तव्ययायाससाध्ययागादौ तु विशिष्य स्वर्गत्वादिनैवोपस्थितेष्टसाधनत्वाक्षेपः। पचेदित्यादौ च भाविपाक इष्टसाधनं प्रवर्तनाविषयत्वादित्यनुमानेन सामान्यरूपेण। यद्यपि यागादौ व्याप्तिग्रहाभावान्नानुमानं सम्भवति, तथाप्याप्तोपदेशाद् व्याप्तिग्रहः।

प्रथमोपदेशेऽपि योगिनां योगप्रभावेणैवोक्तव्याप्तिग्रहः। योगिनां सद्भावे चाभियुक्तोक्तिप्रमाणेन कल्पितश्रुतिरेव मानम्। अस्ति शास्त्रकाराणां शैली यदाचारात् स्मृतिकल्पनं स्मृत्या च श्रुतेः। प्रतिपादितश्चैतद् भर्तृहरिणा—

> ज्ञानमस्मद्विशिष्टानां सर्वं सर्वेन्द्रियं विदुः।
> अभ्यासान्मणिरूप्यादिविशेषेष्विव तद्विदाम्॥ इति।

ईश्वरसत्त्वे च योगिन एव प्रमाणम्। तत्र योगिनां योगाभ्यासबलेन, ईश्वरस्य च स्वत एव व्याप्तिग्रहो बोध्यः।

"अहरहः सन्ध्यामुपासीत" इत्यादि नित्यनैमित्तिकविध्योरवश्यानुष्ठेयत्वमपि प्रेरणया बोध्यते, अतस्तदकरणे प्रत्यवायः। तत्र लिङादिसमभिव्याहारे व्यापारान्तरस्याननुभवाल्लिङाद्यन्तशब्दरूप एव व्यापारः। तस्य च प्रेरणात्वरूपाखण्डोपाधिना लिङ्वाच्यता। एवञ्च तस्य लिङ्रूपशब्दरूपत्वेन शब्दनिष्ठत्वेन च शाब्दी भावनेत्याख्योपजायते। लोके पुरुषनिष्ठत्वञ्च तादृशशब्दप्रयोक्तृतयाऽवच्छेदकत्वेन। लिङ्गसंख्यानन्वितत्वाद् व्यापारपदव्यवहार्याऽपि सा प्रेरणात्वेन सविषया च। सा च प्रवर्तना न लिङ्वाच्याऽपि तु तद्द्योत्या, पचेत्यादौ लिङादे-

रसत्त्वेऽपि प्रवर्तनाया बोधात् । अन्तर्भावितण्यर्थे प्रवर्तनाया धात्वर्थत्वेन दृष्टत्वाच्च । द्योत्यत्वादेव धात्वर्थे प्रवर्तनाया विशेषणतया प्रतीतिः । किञ्च, प्रवर्तनाया वाच्यत्वे देवदत्तादेर्धात्वर्थे विशेषणतयाऽन्वयाभावात् प्रधानीभूतधात्वर्थाश्रयत्वाभावेनाकर्तृत्वात् कर्तरि लिङाद्यनापत्तिः । तत्र धातूपस्थाप्यव्यापारेषु प्रयोजकव्यापारस्य प्रवर्तनारूपस्य विषयितया विशेषणत्वम्, धात्वर्थानाञ्च विषयतया विशेष्यत्वम् । तथा च पचेदित्यत्रैककर्तृका प्रवर्तनाविषयीभूता पाकानुकूला क्रियेति बोधः । तत्र सकलकारकविशिष्टे धात्वर्थे प्रवर्तनाया विशेषणत्वे विधिप्रत्ययस्तात्पर्यग्राहकः । प्रवर्तनाक्षिप्तमज्ञातज्ञाप्यत्वं श्रेयःसाधनत्वञ्च प्रवर्तनाविशिष्टधात्वर्थे प्राप्तमपि तात्पर्यतो गुणांशे एव पर्यवस्यति । तत्र प्रवर्तनायां वर्तमानकालतैव प्रतीयते, शब्दशक्तिस्वभावात् । धात्वर्थे तु भूतभविष्यत्कालतैव । एवञ्च प्रवर्तनायां लिङ्युत्तमपुरुषो न भवति, स्वप्रवृत्तौ स्वप्रेरणाया अकारणत्वेन तज्ज्ञानानुपयोगात् । अत एवोत्तमपुरुषो विधिशक्तिप्रतिबन्धक इति तान्त्रिकाणां प्रसिद्धिः । अत एव यच्छब्दैवकारापिशब्दयोगे न लिङ् लकारः, विधिशक्तिप्रतिबन्धकत्वात् ।

यद्यपि लकाराणां भूतभविष्यद्वर्तमानकालेषु साङ्कर्येणैव विधानाद् विविच्य तत्तदर्थे याथार्थ्येन प्रयोगः प्रथितप्रज्ञैर्बुधैरपि कर्तुमशक्यः, तथैव तदर्थनिर्णयोऽपि ।

यथा "विभाषा कथमि लिङ् च" इति सूत्रेण कथमित्यस्य विभाषया लिङ्विधानेन तत्रैव काले लिङ्लटोरुभयोरपि विधानात् कथं धर्मं त्यजेस्त्यजसि वेति प्रयोगः । एवं "विलङ्घ्य लङ्कां निकषा हनिष्यति" इत्यत्र भूतकाले लङ् लकारः । "आशंसायां भूतवच्च" इति सूत्रेण भविष्यति काले भूतवद्वर्तमानवच्चातिदेशेन लुङ्लटोरपि विधानेन देवश्चेदवर्षीद् वर्षति वर्षिष्यति वेति प्रयोगः । अथवा तर्हि यावच्छक्यं मया निर्णीतं सामान्येन, विशेषतो लकारार्थप्रक्रियातोऽवगंस्यते । अतस्त्रुटयो मदीयाः क्षन्तव्याः । अन्ते च—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

इत्यनुसारं स्वमनस्तोषमनुभवन्नहं विरमामि ॥



# वेदार्थविमर्शः

श्रीरघुराजमिश्रः, वा०सं०वि०वि० वैदिकविज्ञानविभागेऽध्यापकः ।

## उपोद्घातः

वैदिकं विज्ञानमिति नवीन इव विषयः प्रतीयते । किन्तु विषयेऽस्मिन् विद्यावाचस्पति-श्रीमधुसूदनशर्ममहाभागानामिदं पद्यमेवाभिसन्धेयम्—

यत्र प्रदर्श्या विषयाः पुरातना यत्र प्रकारोऽभिनवः प्रदर्शने ।
यत्र प्रमाणं श्रुतयः सयुक्तयस्तद् वेदविज्ञानमिदं विमृश्यताम् ॥

अत्र तावद् वैदिकं विज्ञानमिति पदद्वयं वर्तते । तत्र वैदिकमिति—'वेदस्येदम् = वेद-सम्बन्धि' इत्यर्थेन भाव्यम् । तत्र को नामार्थो वेदशब्देनाभिप्रेतो वैदिकसाहित्ये तत्र तत्रेति यथा-मत्युपस्थापयितुं प्रवृत्तोऽस्मि ।

वेदार्थश्चायं पौरुषेयत्वापौरुषेयत्वविमर्शमुखेनास्माकं भारतीयसाहित्ये विवृतः । यद्यप्य-धुनातनैः शिक्षितैः पौरुषेयत्वापौरुषेयत्वविमर्शोऽयं विचारानर्हताकोटिमुपनीतः, तथापि भारतीय-साहित्ये मुख्यतयोपस्थापितोऽयं विषयो नैवोपेक्षामर्हति । अतस्तस्य तात्त्विकताम् = वैज्ञानिकतां प्रतिपिपादयिषुरहमग्रे प्रदर्शितया दिशा विषयमुपस्थापयामि । वेदानां पौरुषेयत्वापौरुषेयत्वविमर्शे मुख्यतया त्रीणि मतानि भवन्ति—

१. वेदा अपौरुषेया इति पूर्वोत्तरमीमांसामतम् ।

२. वेदा ईश्वरकृता इति नव्यन्यायमतम् ।

३. वेदा महर्षिकृता इति सांख्य-प्राचीनन्यायवैशेषिकमतानि ।

१. तत्रापौरुषेयत्वप्रतिपादिके पूर्वोत्तरमीमांसे अवसेये । यथा पूर्वमीमांसासूत्राणि—"वेदां-श्चैके सन्निकर्षं पुरुषाख्याः । अनित्यदर्शनाच्चोक्तं तु शब्दपूर्वकत्वम् । आख्या प्रवचनात् । परं तु श्रुतिसामान्यमात्रम्" इति । उत्तरमीमांसासूत्रे—"शब्द इति चेन्नातः प्रभवात् प्रत्यक्षा-नुमानाभ्याम् । अत एव च नित्यत्वम्" ( १।३।२८,२९ ) । अयमेषामभिप्रायः—इमे वेदा अकर्तृकाः कर्तुरश्रवणात् । महर्षयस्तु द्रष्टारो न कर्तारः । अतश्च पुरुषमात्रेणानिर्मितत्वाद-पौरुषेयाः । शब्दानां नित्यत्वसिद्धान्ताच्चैते स्वयमपि नोत्पन्नाः । एषां शब्दानामर्था अपि

नित्याः, जगतोऽनादित्वात् । शब्दार्थयोः सम्बन्धोऽपि नित्यः । अत एव शब्दार्थमूलकोऽयं वेदो नित्योऽपौरुषेयः प्रतिपत्तव्यः ।

२. वेदा ईश्वरकृता इति नव्यन्यायमतम् । यथाह कुसुमाञ्जलावुदयनाचार्यः—

प्रमायाः परतन्त्रत्वात् सर्गप्रलयसम्भवात् ।
तदन्यस्मिन्नविश्वासान्न विधान्तरसम्भवः ॥

( कुसु० द्वि० स्तव० श्लो० १ )

स्यादेतत् । परतः प्रामाण्येऽपि नित्यत्वाद् वेदानामनपेक्षत्वम् । महाजनपरिग्रहाच्च प्रामाण्यमिति को विरोधः । न, उभयस्याप्यसिद्धेः । यदा वर्णा एव न नित्यास्तदा कैव कथा पुरुषविवक्षाधीनानुपूर्वीविशिष्टवर्णसमूहरूपाणां पदानाम् । कुतस्तरां च तत्समूहरचनाविशेष-स्वभावस्य वाक्यस्य । कुतस्तमां तत्समूहस्य वेदस्य । परतन्त्रपुरुषपराधीनतया प्रवाहाविच्छेदमेव नित्यतां ब्रूम इति चेत्, एतदपि नास्ति, सर्गप्रलयसम्भवात् ।

एवमेव तत्त्वचिन्तामणिप्रामाण्यवादे गङ्गेशोपाध्यायवचनम् । यथा शाब्दप्रमायां लोके वक्तुर्यथार्थवाक्यार्थज्ञानं न गुणः, किन्तु योग्यतादिकं यथार्थतज्ज्ञानं वा । लाघवादावश्य-कत्वाच्च । एवं वेदेऽपि यथार्थयोग्यताज्ञानमेव गुण इति न वैदिकप्रमाया गुणजन्यत्वेनेश्वरसिद्धिः । स्यादेतत् । वेदवक्तुर्यथार्थवाक्यार्थज्ञानमपि गुणः, लोके प्रमाणशब्दं प्रति तादृशस्य ज्ञानस्य हेतुत्वात् । एवं च वेदो वाक्यार्थगोचरयथार्थज्ञानवत् स्वतन्त्रप्रणीतः, प्रमाणशब्दत्वात्, गामा-नयेति वाक्यवद् इतीश्वरसिद्धिः ।

अथ तात्पर्यविषये वेदः प्रमाणम् । न चास्मदादेर्वेदं विनाऽतीन्द्रियवेदार्थगोचरज्ञानम् । येन तत्प्रतीतीच्छयोच्चारणं भवेत् । न च वेदादेव तत्, अन्योन्याश्रयात् । अतः सकलवेदार्थ-दर्शिना यस्य वेदस्य यदर्थप्रतीतीच्छयोच्चारणं कृतं स तत्र प्रमाणमिति तादृशेच्छैव गुणः । तज्जन्या वेदार्थप्रमेति तदाश्रयस्वतन्त्रपुरुषपौरेयसिद्धिः ।

अयमभिप्रायः—नायं वेदः कूटस्थनित्यो न वा प्रवाहनित्यः । तेन वेदानां नित्यत्वाभ्यु-पगमस्तावन्न सम्भवति । किन्त्वनित्यत्वेऽप्यतीन्द्रियार्थविषयतयाऽतीन्द्रियार्थद्रष्टुरीश्वरस्यैव तत्कर्तृत्वं सम्भवति ।

३ वेदा महर्षिकृता इति तृतीयं मतम् । तत्रादौ सांख्यमतम्—

न नित्यत्वं वेदानां कार्यत्वश्रुतेः ।
न पौरुषेयत्वम्, तत्कर्तुः पुरुषस्याभावात् ।

मुक्तामुक्तयोरयोग्यत्वात् ।

नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत् ।

तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः ।

यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत् पौरुषेयम् ।

( सां० सू० ५.४५-५० )

वृक्षाङ्कुरादिवत् सूर्यचन्द्रादिवच्चैते वेदा अपि प्रकृतिनियमानुसारेण स्वयमुत्पन्नाः । अत एवानित्याः ।

वेदा महर्षिकृता इति प्राचीनन्यायमते महर्षिगौतमसूत्रम्—

आप्तोपदेशः शब्दः ।

स द्विविधो दृष्टादृष्टार्थत्वात् । ( न्या० सू० १।२।७,८ )

मन्त्रायुर्वेदप्रामाण्याच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ।

( न्या० सू० २।१।६८ )

एवमेव वैशेषिकसूत्रमतम् । यथा—

बुद्धिपूर्वा वाक्यकृतिर्वेदे ।

ब्राह्मणे संज्ञाकर्मसिद्धिलिङ्गम् ।

आर्षं सिद्धिदर्शनं च धर्मेभ्यः ।

( वैशे० सू० ६।१-३ )

पूर्वोक्तगौतमसूत्रव्याख्याने वात्स्यायनभाष्यादौ स्पष्टं यद् वेदा महर्षिकृताः पौरुषेयाः । तेषां कूटस्थनित्यत्वाभावेऽपि प्रवाहनित्यत्वमवश्यमभ्युपेयम् । यैरेव भारद्वाजप्रभृतिभिरायुर्वेदा उक्तास्तैरेव चेमे वेदा अपि । अत एव यथैवायुर्वेदानां प्रामाण्यं तथैव वेदानामपि भाव्यम् ।

एवमेव वैयाकरणमहाभाष्यकैयटयोरपीदमेव मतं प्रख्यापितम्—"ननु चोक्तम्—नहि च्छन्दांसि क्रियन्ते, नित्यानि छन्दांसीति । यद्यप्यर्थो नित्यः । या त्वसौ वर्णानुपूर्वी साऽनित्या । तद्भेदाच्चैतद् भवति काठकं कालापकं मौद्गलं पैप्पलादकम् । शौनकादिभ्यश्छन्दसि ( अष्टा० ४।३।१०६ ) शौनकेन प्रोक्तमधीयते शौनकिनः, वाजसनेयिनः । कठचरकाल्लुक् । कठाः । चरकाः ।" इति, "महाप्रलयादिषु वर्णानुपूर्वीविनाशे पुनरुत्पद्य महर्षयः संस्कारातिशयाद् वेदार्थं स्मृत्वा शब्दरचनां विदधति" ( कै० ४।३।१०१ ) इति ।

तदेवं मुख्यतया त्रीणि मतानि पर्यवसितानि—

१. वेदा अपौरुषेयाः ।

२. वेदा ईश्वरकृताः ।

३. वेदा महर्षिकृता इति ।

त्रिविधानाममीषां मतानां यथास्थानं सुव्यवस्थितत्वं समन्वयं च प्रतिपिपादयिषुरहं यथामति प्रस्तौमि ।

तदत्र—

गुरूक्तवादान् प्रतिपद्य तेषां प्रदर्शनायैष कृतः प्रयत्नः ।
असाधु यत्तत्र मम प्रमादो यत्साधु सर्वः स गुरुप्रसादः ॥

## विद्या-वेद-ब्रह्म-शब्दानां प्रवृत्तिनिमित्तम्

तत्र वेदशब्दार्थविषये विचारप्रवणैर्विद्वद्भिरेवमवधातव्यम्—विद्या नाम प्राणानां देवानां भूतानां भौतिकानां चार्थानां नियतः कार्यकारणभावः । नियतं सत्यं याथातथ्यम् । एवं सा विद्या तद् ब्रह्म स वेदः ।

अत्र प्राचां व्यवहारः—यद्यपि गृह्यमाणधर्मेणाभिनीयमाना नियतिर्ब्रह्म, गृहीतपूर्वाहितसंस्कारेणाभिनीयमाना नियतिर्विद्या, एवं वाचाऽभिनीयमाना नियतिर्वेदः—इत्येवमेषां व्यवस्थितविषयत्वमिष्टम्, तथाप्येषु व्यवहारसाङ्कर्येण प्रवर्तन्ते प्राञ्चः । धर्म-संस्कार-वाग्विषयत्वमनपेक्ष्यैवोपचरन्ति स्म पूर्वे आचार्याः—त्रयो वेदाः, त्रयी विद्या, त्रयं ब्रह्मेति ।

## व्यवहारसाङ्कर्यम्

अपि च शब्दोपपादितं देवताविज्ञानं वेदः, देवताविज्ञानोपपादकशब्दो मन्त्रः—इत्येवं वेदमन्त्रशब्दयोर्व्यवस्थितविषयत्वेऽपि संज्ञासंज्ञिनोस्तादात्म्योपचारात्तयोः सङ्कीर्णो व्यवहारः । यथा—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता ॥

इत्यत्र शब्दाभिप्रायेण वेदशब्दप्रयोगः । एवम्—

"ऋषयो मन्त्रद्रष्टारः । साक्षात्कृतधर्माण ऋषयो बभूवुः । तेऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् प्रादुः" (नि० अ० १) इत्यादौ निरुक्तकारेण विद्याभिप्रायेण मन्त्रशब्दप्रयोगाच्च

व्यासज्यवृत्तिपदानामवयवेऽपि प्रयोगः। अथवाऽन्योन्यव्यासक्तयोः शब्दतदर्थयोर्मन्त्रशब्दप्रयोगो भवति। ततश्चेह दैवतविज्ञानं देवताशीश्च मन्त्रपदार्थान्तर्भूते। व्यासज्यवृत्त्या च समुदायदृष्टाः शब्दा अवयवेऽपि प्रवर्तन्ते। यथा ग्रामशब्दोऽयं सीमापरिच्छिन्नप्रदेशानुगतशालासमुदायस्थ-जनसमुदाये निरूढः। तथापि प्रदेशेऽपि प्रयुज्यते, शालासमुदाये च, जनसमुदाये च। यथा— 'ग्रामे प्रविष्टः' इति वाक्ये ग्रामशब्दः सीमाबद्धभूभागे प्रयुक्तः। 'ग्रामो दग्धः' इति वाक्ये च गृहाणां समूह एव ग्रामपदार्थः। एवं 'समग्रो ग्राम आगतः' इत्यत्र जनसमुदाय एव ग्राम-शब्दार्थः। यथा वा देशविशेषे रूढः पञ्चालशब्दस्तदवयवेऽपि प्रयुज्यते। यथा—पूर्वे पञ्चालाः, उत्तरे पञ्चाला इति। एवं शब्दोपदिष्टविज्ञाने निरूढोऽयं मन्त्रशब्दः केवले शब्दे केवले विज्ञाने च प्रयुज्यते। एवं मन्त्रसमानार्थो ब्रह्मशब्दोऽप्यस्ति। अत एवास्यापि द्वैधीभावमाचष्टे—

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत्।
शाब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति॥

इति शब्दात्मकब्रह्मवेद्यमेवैतद् विज्ञानात्मकं परं ब्रह्म।

तदेवं सिद्धं यद् वाक्यं विद्या—एतदुभयव्यूहे निरूढोऽयं मन्त्रशब्दो ब्रह्मशब्दश्च। तथा च ब्रह्मैव वेदः, ब्रह्मणो विद्या वा वेद इति सिद्धम्। तदिदं ब्रह्म यज्ञमात्मानं कुर्वत् तेनैव रूपेण सर्वमभवच्चेति भवति च भविष्यति च। इदं च यज्ञविज्ञानं वेदः। "यज्ञोऽयमुच्यते धर्मः", "चोदनालक्षणोऽर्थो धर्मः" इति जैमिनिना यज्ञस्य धर्मत्वप्रतिपादनात्। तस्माद् धर्म-विज्ञानं वेदः। यज्ञशरीरे च निहिताः सर्वे देवाः। तेन यज्ञविज्ञानादेते सर्वे देवा विज्ञाता भवन्ति। तस्माद् दैवतविज्ञानं वेदः। सर्वेषां देवानां प्रधानः प्रजापतिः। प्रजापतिप्रभवश्चायं यज्ञः, प्रजापतिप्रतिष्ठः प्रजापतिपरायणश्च। तदेतत्प्रजापतिविद्या वेदः। अनन्ताः प्रजापतयः, अनन्ताश्चैते यज्ञाः। तेषु सर्वेषु प्रधानः सर्वेषामात्माऽयं भगवान् सूर्यः। तस्मात् सूर्यविज्ञानं वेदः। सूर्यस्यैव विज्ञानात् सर्वे देवाः, सर्वे यज्ञाः, सर्वे प्रजापतयश्च सुविज्ञाता भवन्ति।

तदित्थमेष सूर्यवेदश्च दैवतवेदश्च धर्मवेदश्च यज्ञवेदश्च प्रजापतिवेदश्च ब्रह्मवेदश्च भवति।

अथवाऽयं साधारण्येन सर्ववेदः। तस्मात् सामान्येन वेदशब्दः प्रयुज्यते। न त्वायुर्वेदपशु-वेदवृक्षवेदादिवदयं केनचिद् विशेषणेन विशिष्यते।

## ऋषयः

ततश्च पुरात्वे तं तमर्थं दृष्ट्वा यैरिदं विज्ञानमुपदिष्टं त एते वेदाचार्या ऋषय आख्यायन्ते। तथा चैषामृषीणां शब्दरचनाकर्तृत्वाभिप्रायेण मन्त्रकर्तृत्वम्, देवताविज्ञानसाक्षात्कर्तृत्वाभिप्रायेण तु मन्त्रद्रष्टृत्वमित्युभयं समञ्जसं भवति। अत एव—

यामृषयो मन्त्रकृतो मनीषिणोऽन्वैच्छन् देवास्तपसा श्रमेण।
तां दैवीं वाचं हविषा यजामहे सा नो दधातु सुकृतस्य लोके॥
(तैत्तिरीयब्राह्मणे २।७।७)

नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो
मा मामृषयो मन्त्रकृतो मन्त्रपतयः परादुः।
माहं ऋषीन् मन्त्रकृतो मन्त्रपतीन् परादाम्॥ (४।१।१)

इति तैत्तिरीयारण्यके च मन्त्रकृत्त्वमृषीणां श्रूयते।

देवा इह पारोवर्यविदः शुश्रुवांसोऽनूचानाः। तदीया हीयं वाक्। युक्तियुक्तं चैतत्। नह्येषा वाक्यरचना स्वतः सम्भवति, शरीरबुद्धीन्द्रियोपपाद्यत्वात्। तथा चोक्तमभियुक्तैः— "बुद्धिपूर्वा वाक्यकृतिर्वेदे, ब्राह्मणे संज्ञाकर्मसिद्धिलिङ्गम्" (वै० सू०) इति। तस्मात् कृतका एते वेदमन्त्राः। ये त्वतीन्द्रियार्थविज्ञानात्मका वेदाः, तेऽतीन्द्रियत्वादनादित्वादपौरुषेयत्वाच्चोत्पादयितुमशक्याः।

यत्तु "नित्या वागुत्सृष्टा स्वयंभुवा" इति श्रुत्या,

अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥

इत्यादिस्मृत्या च वागात्मकस्यैव वेदस्याकृतकत्वमुपदिश्यते, तदन्यवागभिप्रायकं द्रष्टव्यम्;
"यदि वै प्रजापतेः परमस्ति वागेव तत्" (शत० ५।१।३-११)।

इति शतपथब्राह्मणस्य वाजपेयप्रकरणे प्रकृतां काञ्चिद् वाचमुपलक्ष्य तथाश्रवणात्। न सा वागियमेवेति भ्रमितव्यम्, तस्याः सर्वलोकात्मकतया त्रैलोक्यात्मकतया, सूर्यात्मकतया च बहुधा श्रूयमाणत्वात्। तथा च "वागेवेदं सर्वम्" इत्यैतरेयब्राह्मणम्। "त्रयं वै विद्या ऋचो यजूंषि सामानि। इयमेवर्चः, अन्तरिक्षमेव यजूंषि, द्यौः सामानि" इति शतपथब्राह्मणम्। एवम्— "यदेतन्मण्डलं तपति तन्महदुक्थम्, ता ऋचः स ऋचां लोकः। अथ यदेतदर्चिर्दीप्यते तन्महा-

व्रतम्, तानि सामानि, स साम्नां लोकः। अथ य एष एतस्मिन् मण्डले पुरुषः, सोऽग्निः, ता हि यजूंषि, स यजुषां लोकः सैषा त्रय्येव विद्या तपति।" ( शत० १०।५।२।१-२ ) इति।

एतदभिप्रायेणैव—

तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे।
छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मदजायत॥

इति श्रुतिः श्रूयते।

ईश्वरमेवैतं वेदं मन्यन्ते, ईश्वरनिःश्वसितं वा, ईश्वरकृतं वा। तपःप्रभावात्तु स शुद्धान्तःकरणानामाविर्भूतप्रकाशानामतीन्द्रियदृष्टिमतां हृदि स्वयमाविर्भवतीति स नित्यसिद्ध एवार्थः काले काले गृह्यते। तथा च श्रूयते—"तद् वा ऋषयः प्रतिबुबुधिरे, य उ तर्हि ऋषय आसुः" ( शत० २।२।१।१४ ), "मनसो वै समुद्राद् वाचाऽभ्रया देवास्त्रयीं विद्यां निरखनन्। तदेष श्लोकोऽभ्युक्तः—

ये समुद्रान् निरखनन् देवास्तीक्ष्णाभिरभ्रिभिः।
सुदेवोऽद्य तद् विद्याद् यत्र निर्वपणं दधुः॥ इति।

मनः समुद्रः, वाक् तीक्ष्णाभ्रिः, त्रयी विद्या निर्वपणम्" ( शत० ।७।५।२।५२ )

देवा इह पारोवर्यविदः शुश्रुवांसोऽनूचानाः।

तैत्तिरीयारण्यके ( २।९ ) च—"अजान् ह वै पृश्नीन् तपस्यमानान् ब्रह्म स्वयंभु अभ्यानर्षत्। त ऋषयोऽभवन्। तदृषीणाम् ऋषित्वम्। ऋक्संहितायां ( १०।७१।३ ) च—"यज्ञेन वाचः पदवीयमायंस्तामन्वविन्दन् ऋषिषु प्रविष्टाम्" इति।

शतपथब्राह्मणे चापि श्रूयते—"यो वै ज्ञातोऽनूचानः स ऋषिः" (शतपथ० ४।३।४।१९) इति।

किञ्च—

अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत।
स देवाँ एह वक्ष्यति ( ऋ० १।१।२ )।

इत्यादिश्रुतिनिदर्शनेषु प्रयुक्त ऋषिशब्दः पौर्वापर्यानुसन्धानात् प्राणानां साक्षात्कृतधर्मसु विद्वत्सु मनुष्यविशेषेष्वेव प्रवर्तत इति सुस्पष्टम्। अपि च तत्रैव स्मर्यते—

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥

अतश्चैष तमर्थं यथा पश्यति, स तथा परप्रत्यायनाय वाचाऽभिनयति । तदस्य द्रष्टुर्वाक्यं श्रुतिः । तत् प्रमाणम्, अनपेक्षत्वात् ।

यथा हि श्रोतुर्वाक्यं स्मृतिरित्युच्यते । तच्च परतः प्रमाणं भवति, स्वप्रामाण्याय श्रुतिसापेक्षत्वात् । असाक्षात्कृतधर्मतया तत्र वक्तुः परप्रत्ययालम्बनेनैवार्थग्राहित्वात् । न तथायं साक्षात्कृतधर्मा तमर्थम्, आप्तः स्वोक्तिप्रामाण्याय परप्रत्ययमपेक्षते । तस्माद् द्रष्टुर्वाक्यं स्वतः प्रमाणं भवति ।

सोऽयमर्थो भगवता वात्स्यायनेन 'आप्तोपदेशः शब्दः' (न्यायसू० २।१) इति सूत्रव्याख्याने उक्तः—"आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा । साक्षात्करणम् अर्थस्याप्तिः । तया प्रवर्तत इत्याप्तः । ऋष्यार्यम्लेच्छानां समानं लक्षणम् । तथा च सर्वेषां व्यवहाराः प्रवर्तन्ते । स द्विविधः, दृष्टादृष्टार्थत्वात् । यस्येह दृश्यतेऽर्थः स दृष्टार्थः । यस्यामुत्र प्रतीयते सोऽदृष्टार्थः । एवमृषिलौकिकवाक्यानां विभागः" इति ।

तदित्थमेष द्रष्टा द्विविधः सिद्धः—लौकिक ऋषिश्चेति । यत्रासौ श्रोतृभिरपि सर्वैः शक्यं साक्षात्कर्तुमर्थं दृष्ट्वा प्रब्रूते, नातीन्द्रियं द्रष्टुमनुगातुं वा शक्नोति स लौकिको द्रष्टा आप्तः । यस्त्वतीन्द्रियेष्वसंवेद्येष्वनागतेषु च भावेष्वव्याहतप्रचारस्तपःप्रभावजनितां दृष्टिं लब्ध्वा तेनार्षेयचक्षुषा प्रत्यक्षवत् सर्वं याथातथ्येनाधिगच्छति स ऋषिर्द्रष्टा आप्तः ।

सोऽमर्थो निष्कृष्येत्थं द्रष्टव्यः—द्रष्टा, आप्तः, अनूचान इत्येकार्थाः । योऽयमर्थमीक्षते, अन्वीक्षते, परीक्षते, समीक्षते, स विपश्यति, स द्रष्टा । अथ चक्षुरादीन्द्रियजन्यं लिङ्गजन्यं शब्दजन्यं वा यज्ज्ञानं तज्जन्यं पार्ष्ठिकं निर्विकल्पकं ज्ञानमवगमः, सोऽधिगमः, तत्प्रत्यक्षम्, सा प्रभा, साऽर्थस्याप्तिः, तत्सम्पन्न आप्तः । अथ योऽर्थं दृष्ट्वा याथातथ्येनावगम्य यथादृष्टमन्वाचष्टे स उपदेष्टा, सोऽनुशास्ता, सोऽनूचानः ।

तत्रेदं द्रष्टुर्दृश्यं त्रिविधं भवति—भौतिकम्, दैविकम्, अतीन्द्रियञ्च । तत्र भौतिकेष्वर्थेषु ये द्रष्टारोऽनूचानास्तेष्वृषिशब्दो नास्ति । ये तु दैविकेष्वतीन्द्रियेषु चार्थेषु द्रष्टारस्तेष्वयम् ऋषिशब्दः । यद्यपीमे विचित्रा अतीन्द्रियार्थविज्ञानजनकप्रभावा नैसर्गिका एव तत्र तत्र मनुष्येतरप्राणिकुलेष्वपि दृश्यन्ते ।

यथा हि विषमयद्रव्यविज्ञाने श्वबिडालादीनां सामर्थ्यम्, विषहरौषधिविज्ञाने च नकुलादीनाम्। पुरुषादृष्टसन्निधापिते कस्मिंश्चिद् भाविन्यर्थे श्व-शिवा-वायस-पिङ्गलकादिशकुनीनाम्, स्वरोगहरौषधिविज्ञाने च सर्वेषामारण्यपशूनाम्, भविष्यद्वृष्टिविज्ञाने च मण्डूकानाम्।

तदेवमिदमपूर्वमतीन्द्रियार्थावगमसामर्थ्यं तपःप्रभावेणोद्भूयमानं यत्र मनुष्यकुले दृश्यते, स ऋषिराख्यायत इति। तदित्थं पूर्वोक्तानां तिसृणां प्रतिपत्तीनां समन्वय इत्थं द्रष्टव्यः।

वेदशब्दस्तदवान्तरविशेषवाचका ऋग्यजुःसामाथर्वशब्दाश्च श्रुतिषु, पुराणेष्वितरभारतीयसाहित्ये च त्रिधा व्यवहृता दृश्यन्ते—ज्ञानपराः, वैज्ञानिकार्थपराः, शब्दपराश्च।

तथा च वेदनं वेदः। विद् ज्ञाने। वेद्यन्ते ये ते वेदाः। विद्लृ लाभे। विद्यते=ज्ञायतेऽनेन, वेद्यते = ज्ञाप्यतेऽनेन वेति वेद इति विभिन्नाभिर्व्युत्पत्तिभिस्तत्र तत्र वेदशब्दः प्रयुज्यते।

तत्र केवलज्ञानाभिप्रायेण प्रयुक्ते प्रथमार्थके वेदशब्दे वेदस्यापौरुषेयत्वम्, ज्ञानस्य स्वस्वरूपेण नित्यत्वात्, केनाप्युत्पादयितुमशक्यत्वात्। ईश्वररूपा वेदा इत्यपि सुवचम्, ईश्वरस्य ज्ञानरूपतायाः श्रुतिस्मृत्यादौ तत्र तत्र सर्वत्र व्यवहृतत्वात्।

ज्ञानविषयीभूतार्थाभिप्रायेण केवलार्थाभिप्रायेण लौकिकालौकिकार्थविषयकविशिष्टज्ञानाभिप्रायेण वा प्रयुक्ते द्वितीये वेदशब्दार्थे ईश्वरनिर्मिता वेदाः, अर्थानाम् ऋग्यजुःसामाथर्वात्मनां लोकानां लौकिकानां चार्थानामीश्वरनिर्मितत्वात्। तादृशज्ञानस्यापि महर्षिभिरीश्वरप्रसादेनैव लब्धत्वात्।

## वैज्ञानिका वेदाः

आनन्दः, विज्ञानम्, मनः, प्राणः, वाक् चेति पञ्चकलात्मकोऽव्ययपुरुषस्तत्राख्यातः। अत्र कलानां प्राधान्याप्राधान्याभ्यां पुरुषा भिद्यन्ते। एवं मनःप्राणवाग्गर्भितो विज्ञानानन्दप्रधानः पुरुषो मुक्तिसाक्षी। तथा चानन्दविज्ञानगर्भितो मनःप्राणवाक्प्रधानः पुरुषः सृष्टिसाक्षी। एवमत्र मनःप्राणगर्भिताया वाचो विवर्ता इमे वैज्ञानिकवेदाः।

इदमत्रावधातव्यम्—एतस्य विश्वस्य प्रजापतिस्त्रेधा विविच्यते—ज्ञानमयः, कर्ममयः, अर्थमयश्चेति। पूर्वोक्तासु पञ्चसु कलास्वानन्दः, विज्ञानम्, मनश्चेति त्रितयं ज्ञानतन्त्रम्। तत्प्रधानः पुरुषश्चिदात्मा। तस्य महिमा मनोमयो वेदः। अथ मनः प्राणो वागिति त्रितयं कर्मतन्त्रम्। तत्प्रधानः पुरुषः कर्मात्मा। तस्य महिमा प्राणमयो वेदः। अथ वाक्, आपः, अग्निरिति त्रितयमर्थतन्त्रम्। तत्प्रधानः पुरुषो भूतात्मा। तस्य महिमा वाङ्मयो वेदः। यतो हि कर्मात्मा

मनोमयः, प्राणमयः, वाङ्मय आख्यातः। अतस्तस्य महिमापि मनोमयः, प्राणमयः, वाङ्मय उपपद्यते। स चायं वेदो मनसा विज्ञानं जनयति। प्राणेन यज्ञं प्रवर्तयति। वाचा सर्वमाकाशप्रदेशं परितो व्याप्नोति। तस्यैतस्य वाङ्मयस्य वेदस्यैकत्रिंशदधिकैकादशशतानि शाखा भवन्ति। ताश्च पस्पशाह्निके वैयाकरणमहाभाष्ये भगवान् पतञ्जलिरेवमाह—"नवधाऽथर्वणो वेदः (सौम्यवायोः)। एकविंशतिधा बाह्वृच्यम् (सोमसज्जुषोऽग्नेः)। एकशतमध्वर्युशाखाः (आग्नेयवायोः)। सहस्रवर्त्मा सामवेदः (आदित्यस्य)" (व्या० महा० पस्पशा०) इति। अधिदैवतं दिक्सोम-भास्वरसोमरूपयोर्द्वयोः सोमयोः, अग्निवाय्वादित्यनामकानां त्रयाणामग्नीनामेतावत्यः शाखा भवन्तीति कृत्वाधिभौतिकमस्य वाङ्मयस्य वेदस्याप्येतावत्यः शाखाः सम्पद्यन्ते।

तदिदम्—

सहस्रधा पञ्चदशान्युक्था यावद् द्यावापृथिवी तावदित्तत्।
सहस्रधा महिमानः सहस्रं यावद् ब्रह्म विष्ठितं तावती वाक्॥
(ऋ० १०।११४।८)

तथा

उभा जिग्यथुर्न परा जयेथे न पराजिग्ये कतरश्चनैनोः।
इन्द्रश्च विष्णो यदपस्पृधेतां त्रेधा सहस्रं वि तदैरयेथाम्॥
(ऋ० ६।६९।८)

इत्यादिमन्त्रेषु प्रयुक्तस्य सहस्रशब्दस्य पदार्थस्वरूपनिरूपणप्रसङ्गे—"किं तत्सहस्रमिति इमे लोकाः, इमे वेदाः, अथो वागिति ब्रूयात्" इति श्रुतेः सहस्रप्रमितानां गवां लोकचतुष्टय-व्याप्तानां तत्र तत्र तथैव शाखाभेदेन व्यवस्थितत्वात्।

## वेदशाखाविज्ञानम्

"ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत" इत्यत्र ऋतं नाम नाभिप्रधिरहितं शून्यम्। सत्यं नाम नाभिप्रधिसहितं पूर्णम्। ऋतमापः सूर्यमण्डलात् प्राक् परमेष्ठिमण्डलवर्तिन्यः। सत्यमग्निः। आपश्चेमा अग्निं गर्भमदधत। गर्भस्थाग्निवशादपां विकासोऽजायत। तत एता आपः षोढा समपद्यन्त—विकासात् पूर्वा स्थितिः पूर्वावस्थारूपं शून्यं प्रथमम्। अथ विकासाद् अद्भ्य एवैतानि जातानि पञ्चरूपाणि सत्यानि। तथाहि सर्वदिक्षु दश गभस्तयः प्रथमो विकासो दशसंज्ञः। एकैकस्मिन् गभस्तौ पुनर्दश दश गभस्तयो द्वितीयविकासः शतसंज्ञः।

तत्राप्येकैकस्मिन् गभस्तौ पुनर्दश दश गभस्तयस्तृतीयविकासः सहस्रसंज्ञः। तदेवं वागध्यूढा प्राणा वाङ्मयीं सूर्यबिम्बमूर्तिमग्रतोऽग्रतः सञ्चारयन्ति। प्रत्याकाशबिन्दुस्थास्ता मूर्तयः सह सन्निविशन्त्यः प्रचरन्ति। बलसाम्याच्च प्रवर्तमानाः प्राणाः परितो मूर्तिभिः सह सन्निविष्टाभिर्वर्तुलवृत्तं जनयन्ति। वर्तुलवृत्तानामुत्तरोत्तरवृद्ध्या तेषु मूर्तिसन्निवेशानुरोधेनाधिकाधिकमूर्तिसम्पादनार्थं पूर्वपूर्वमूर्तीनामारम्भणद्रव्याण्युत्तरोत्तरं हीयन्ते। तेन पूर्वापेक्षयोत्तरोत्तरमूर्तयो ह्रस्वीभवन्तीति प्रत्यक्षं दृश्यते। शरीरतो ह्रस्वीभवन्त्यस्ता मूर्तयः संख्यातो वर्धन्ते।

तत्र पृथिवीहृदयादुत्थिताया विकासरेखायाः पृथिव्यन्तःपृष्ठं यावत्प्रथमं पूर्णस्थानमेकं नाम। तन्महोक्थम् उक्थमूर्तीनामाश्रयभूतम्। अथैतस्माद् महोक्थस्थानाद् उत्थिता मूर्तिर्यत्रोर्ध्वं गता दशमूर्तयः सम्पद्यन्ते, तदिदं द्वितीयं स्थानं दशत्संज्ञम्। पुनरितः स्थानादुत्थितैका मूर्तिर्यत्रोर्ध्वं परितो गता दश मूर्तयः सम्पद्यन्ते, तदस्या विकासरेखायास्तृतीयं स्थानं शतसंज्ञम्। पुनरेवमितः स्थानादुत्थितैका मूर्तिः परितो यत्रोर्ध्वं गता दशमूर्तयः सम्पद्यन्ते, तदस्या विकासरेखायाश्चतुर्थं स्थानं सहस्रसंज्ञम्। नातः परमुत्थानं विकासक्रियाया उपपद्यते। तस्मात् "सहस्रं वै पूर्णम्" इत्याहुः। अत एवायं सूर्यः 'सहस्रांशुः' इत्युच्यते।

तदेवमापो गावः। तासामेकधा दशधा शतधा सहस्रधा च चतुर्धा विकासः। मेदिनीभूपृष्ठान्तमेकधा। त्रिवृत्स्तोमान्तं दशधा। एकविंशस्तोमान्तं विंशतिधा। त्रयस्त्रिंशस्तोमान्तं शतधा। अष्टाचत्वारिंशस्तोमान्तं सहस्रधेति। तदिदं संक्षेपतो वैज्ञानिकवेदस्वरूपम्।

ज्ञानविषयीभूतार्थाभिप्रायेण केवलार्थाभिप्रायेण लौकिकालौकिकार्थविषयकविशिष्टज्ञानाभिप्रायेण वा प्रयुक्ते वेदशब्दे ईश्वरनिर्मिता वेदाः, अर्थानामीश्वरनिर्मितत्वात्, तादृशज्ञानस्यापि महर्षिभिरीश्वरप्रसादेनैव लब्धत्वाच्च।

तत्रापि तादृशज्ञानाभिप्रायेणेश्वरनिःश्वसितं वेदाः, ज्ञानस्य नित्यत्वेनार्थोपहितत्वमात्रस्येश्वरसम्पादितत्वेन प्रणीतत्वकथनस्यासामञ्जस्यात्। तत्तदर्थपरत्वे चेश्वरप्रणीता इति युक्तमेव।

ज्ञानानुवेधकशब्दसमूहाभिप्रायेण प्रयुक्ते वेदशब्देऽपि शब्दनित्यत्ववादिनामपौरुषेया वेदाः। अनित्यत्ववादिनां त्वीश्वरप्रणीताः।

## ३ शब्दपरा वेदाः

अथादिप्रवक्तॄणां ज्ञानप्रयोज्यशब्दसमूहाभिप्रायेण श्रोतॄणां ज्ञानप्रयोजकशब्दसमूहाभिप्रायेण वा प्रयुक्ते वेदशब्दे त्वृषिप्रणीता वेदाः, ऋषिभिरेवेश्वरप्रसादेन ज्ञानमवाप्य मन्त्रब्राह्मणात्मकशब्दसमूहस्य प्रयुक्तत्वात्। तत्रापि शब्दनित्यतावादे वाक्यरचनाभिप्रायेण प्रणीतत्वं व्यवहर-

णीयम्। अनित्यतावादे तु शब्दाभिप्रायेणापि । वाक्यस्फोटवादिनां वाक्यनित्यतापक्षे तु तादृशवाक्याभिव्यञ्जकप्रथमध्वनिकर्तृत्वमात्रेण प्रणेतृत्वमित्यूहनीयम्।

तपोयोगादिनेश्वरप्रसादमवाप्य समाधौ तत्तत्स्वर्गापूर्वदैवतादिज्ञानं यज्ञस्वर्गादिकार्य-कारणभावज्ञानं च प्रत्यक्षरूपमवाप्य महर्षिभिर्ऋषिभिश्च मन्त्रा ब्राह्मणानि च प्रकटितानीति तेषु तेषु मन्त्रेषु त एव ऋषित्वेनाद्यापि स्मर्यन्ते। ब्राह्मणानि च तत्तदृषिनाम्ना प्रसिध्यन्त्येव। ते च मन्त्रब्राह्मणात्मका वेदा शिष्यप्रशिष्यपरम्परायां प्रकीर्णरूपेण प्रचरन्ति स्म। एकस्मिन् काले भगवता व्यासेन तेषां मन्त्राणां संहितारूपेण ग्रथनं कृतम्। शाखाभेदश्च प्रवक्तॄणामभिप्राय-भेदाद् उच्चारणभेदाद्वाऽभूदिति स्पष्टं पुराणादौ तत्र तत्र। शाखाभिर्भिन्नास्तास्ताः संहिता व्यास-शिष्यपरम्परानाम्नैवाद्यापि व्यवह्रियन्त एव।

ऋग्यजुःसामशब्दाश्च पद्यगद्यगेयभेदेन विभिन्नाया रचनाया अवबोधकाः, तत्त-त्प्राधान्येन संहितास्तत्तन्नामभाजः। तत्रापि ऋक्संहिता ऋषिक्रमेण, यजुःसंहिता तु यज्ञोपयोग-क्रमेण संग्रथितेति सुस्पष्टं तद्विज्ञानाम्। अथर्वसंहिता त्वथर्वणा ऋषिणा संग्रथितेति ग्रन्थितुर्नाम्नैव प्रसिद्धा। पद्यादिरचनात्रैविध्याभिप्रायेण त्रयो वेदा इति व्यवह्रियते। ऋत्विजां चतुष्टयाभि-प्रायेण तु चत्वारो वेदा इति, शान्तिकपौष्टिकाद्यर्थमथर्ववेदस्यापि ब्रह्मणाध्येयत्वादिति सुस्पष्टं प्रतिपादितं श्रीमत्सायणाचार्यभाष्यादौ तत्र तत्र।

तमेतमर्थं बोधयतः श्रीशौनककृता बृहद्देवता सर्वानुक्रमणी चेति।

तदेवं वेदशब्दस्य वाच्यो ज्ञानरूपोऽर्थः, वैज्ञानिकोऽर्थः, शब्दपरश्चार्थः प्रतिपादितः। तत्रापि ज्ञानं ज्ञानसम्बद्धं जनकं जन्यं वा शब्दसमूहरूपम्, लौकिकालौकिकाश्चार्था ज्ञानविषयी-भूता इति त्रितयमेव भवतीति विद्यावाचस्पतिश्रीमधुसूदनमहाभागप्रणीते महर्षिकुलवैभवे शारीरक-विमर्शे, एवञ्चास्मद्गुरुचरणमहामहोपाध्यायश्रीगिरिधरशर्मचतुर्वेदमहोदयरचितायां तद्ग्रन्थटीका-याञ्च सुविशदं सुविस्पष्टमवलोकनीयम्।

## विज्ञानशब्दार्थः

एवञ्च विज्ञानशब्दार्थेऽपि बहवो विचिकित्सन्ते। सामान्यज्ञानं ज्ञानम्, विशेषज्ञानं विज्ञान-मिति बहवोऽभिप्रयन्ति। अत्रार्थेऽनेकेषामभियुक्तानामुक्तयः प्रभवन्ति—

यया स देवो भगवान् विद्यया वेद्यते पुनः।
साक्षाद्देवो महादेवस्तज्ज्ञानमिति कीर्तितम्॥

चतुर्दशानां विद्यानां धारणं हि यथार्थतः ।
विज्ञानमिति तद् विद्याद् येन धर्मो विवर्धते ॥ इति ।
मोक्षे धीर्ज्ञानम्, अन्यत्र विज्ञानं शिल्पशास्त्रयोः । इत्यमरसिंहश्चेति ।
सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ ( गीता १८।२ )
ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः । ( गीता ७।२ )
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् । ( गीता ८।१ )

एवञ्च श्रीमधुसूदनसरस्वतीमहोदयः स्वीये गीताव्याख्याने देवलवचनमुपन्यस्यति—

यत्पुनर्वैदिकीनाञ्च लौकिकीनाञ्च सर्वशः ।
धारणं सर्वविद्यानां विज्ञानमिति कीर्त्यते ॥

एवं श्रीशङ्कराचार्यमहाभागा अपि 'ज्ञानं तेऽहं सविज्ञानम्' इतिपदव्याख्याने "सविज्ञानं स्वानुभवयुक्तम्" इति कथयन्ति ।

श्रीरामानुजाचार्यमहाभागा अपि "परतत्त्वगतासाधारणविशेषविषयकं ज्ञानम्" इति प्रतिपादयन्ति ।

एवञ्चाध्यारोपापवादन्यायेन गुरूपदेशस्तत्राध्यारोपो विज्ञानम्, अपवादश्च ज्ञानमित्यूहनीयम् । तदेवं विज्ञानशब्दार्थे विशेषेण ज्ञानं विशिष्टं ज्ञानमिति वा श्रीशङ्करभगवत्पादानामभिप्रेतोऽर्थः । स एवार्थो विशेषेण ज्ञानमिति विशेषसहितसामान्यज्ञानमिति समीक्षाचक्रवर्तिमहाभागानामभिप्रायः, अधुना यद्धि पाश्चात्यभाषायाम् 'साइन्स' इति कथ्यते । एवञ्च तमेवार्थमभिप्रेत्य साइन्ससमानार्थकं विज्ञानशब्दमाधुनिका आप्ता प्रयुञ्जते ।

यद्धि प्रयोगेण द्रष्टुं शक्यं तद्विज्ञानम्, यच्च प्रयोगस्य क्षेत्राद्बहिः केवलं सिद्धान्तरूपेण प्रतिपाद्यते तद्दर्शनमित्यधुनातनानां केषाञ्चिद् विदुषां मतम् । किन्त्विदमर्वाक्कालिकमधुनातनं मतमिति निश्चेतव्यम् । वैदिकसाहित्ये किं वा भारतीयसाहित्ये दर्शनविज्ञानयोरयं परिधिविभाजकत्वेन नैव स्वीकृत आसीत् । भारतीयदर्शनेषु मुख्ये दर्शनद्वितये सांख्ये वैशेषिके च सामान्यतो द्विविधानां पदार्थानां परिग्रहो दृश्यते—भूतानां भौतिकानां चेतनानाञ्च । भौतिकं सर्वं प्रायः प्रयोगपरीक्षितम् । चेतनञ्च नैव कदापि प्रत्यक्षतः प्रयोगगम्यम्, अपि तु निदर्शनमुद्रयैवोहनीयम् ।

अस्मासु प्रायो बहवः स्मरन्ति यद् विगतदर्शनपरिषदि न्यायपरिषदध्यक्षाणां महामान्यानां पण्डितराजश्रीराजेश्वरशास्त्रिणां व्याख्यानम्। तत्र ते वैशेषिकसिद्धान्तरीत्याऽधुनातनस्यान्तरिक्ष-यानस्य प्रक्रियां प्रदर्शितवन्तः।

एवं विज्ञानपदार्थे एतदुभयमन्तर्भवति—दर्शनशास्त्रं विज्ञानञ्च। एवं चैतद्विज्ञान-शब्दार्थं निरुक्तकृद् यास्कोऽधिकाधिकं स्पष्टीचकार। स हि ब्रूते—

स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा॥

यदधीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्॥

एवञ्चास्मिन् विज्ञानपदार्थे आधुनिकसाइन्सनाम्ना व्यवहृतो विज्ञानपदार्थस्त्वन्वेत्येव, ततोऽप्यधिकः कश्चन भारतीयदृष्ट्या भावितोऽर्थोऽपि संगृह्यते।

एवं वैदिकसाहित्येऽप्यस्मिन्नेवार्थे विज्ञानशब्दः प्रयुक्तो वर्तत इति निपुणं निभालनीयम्। तथाहि—उपनिषत्स्वात्मवाचकः पञ्चसु कोशेष्वन्यतमकोशवाचकश्च विज्ञानशब्दः सुप्रसिद्धः। तत्र विज्ञानं जीवः, प्रज्ञानं प्राज्ञो वा परात्मेति शङ्करभगवत्पादाः। अत्राप्येकस्मादुद्भूता औपाधिकरूपेण विभिन्नतां गता अनेकत्वं प्राप्ता जीवा विज्ञानविषया इति विज्ञानशब्देन गृहीताः। सर्वत्रानुगतं परतत्त्वं तु ज्ञानरूपमिति प्रज्ञानपदाभिलप्यमिति। पञ्चसु कोशेष्वपि विज्ञानमयः कोशो बुद्धिरूपत्वादनेकतां भजते। आनन्दमयस्तु सर्वत्र निगूढ एक एवेति स्फुटं व्याख्यातं श्रीविद्यारण्यस्वामिभिर्व्याख्यातृभिः।

प्रकृते त्विदमेव निरूपणीयं यदाधुनिकाः 'साइन्स'-पदवाच्यं विज्ञानपदार्थं मन्यन्ते, तदपि विज्ञानं वैदिकविज्ञानमिति विज्ञानपदाभिलप्योऽर्थः। इदं हि सर्वं नैकेन प्रवचनेन प्रत्याययितुं पार्यते, किन्त्वत्र द्वित्राणि निदर्शनानि गभीरज्ञानानां श्रीमतां पुरतः संस्थाप्यन्त एव। प्रथमं तु तैत्तिरीयारण्यकस्य (१।८।५।६)—

अनवर्णे इमे भूमी इयञ्चासौ च रोदसी।
किंस्विदत्रान्तराभूतं येनेमे विधृते उभे॥
विष्णुना विधृते भूमी इति वत्सस्य वेदना।

इह हि पृथिवीमण्डलस्य सूर्यमण्डलस्य च कथं समानान्तरं धारणमिति प्रश्नमुत्थाप्य विष्णुकर्तृकं धारणं स्फुटैरेवाक्षरैर्व्यवस्थापितम्। एवमेवेयमृगपि सूर्याकर्षणविज्ञानं स्फुटं प्रतिपादयति—

इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्या।
व्यस्तभ्नाद् रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः॥

(ऋ० ७।९९।३)

इत्थं बहुत्र विज्ञानसिद्धान्ताः श्रीवाचस्पतिमहाभागैरन्विष्टाः प्रतिपादिताश्च स्वीयेषु ग्रन्थेषु विशेषतो 'जगद्गुरुवैभवम्' इत्यादिषु। एवमेव शतपथब्राह्मणस्य प्रथमेऽनुच्छेदे—"मेध्या वा आपः", "पवित्रं वा आपः" इत्यापो द्विविधविशेषणेन युक्ताः प्रतिपादिताः। तत्र सामान्यदृष्टौ मेध्यपवित्रशब्दयोः पृथगर्थकत्वं नास्ति, परन्तु वैदिकशिरोमणिर्याज्ञवल्क्यः कथं प्रथमेऽनुच्छेदे एव पुनरुक्तिदोषभाक् स्यात्? नैवं सम्भवति, प्रकृतिप्रत्ययविवेचनेन मेध्यपवित्रशब्दयोर्विभिन्नार्थवाचकत्वात्। तथा हि 'मेधृ सङ्गमे' इति धातोः कर्त्रर्थकेन यता मेध्यशब्दनिष्पत्तिः। मेध्या नाम सङ्गमनकर्त्र्य आपः। एवं 'पूञ् पवने' इति धातोः करणार्थकेन इत्रचा पवित्रशब्दनिष्पत्तिः। पवनं नाम मलविच्छेदः। मलविच्छेदकारणत्वमप्सु विद्यते। एवमप्सु सङ्गमकर्तृत्वं मलवियोगकर्तृत्वं चोभौ धर्मौ वर्तेते इति विज्ञापनायापो मेध्यपवित्ररूपद्विविधविशेषणेन विशिष्टाः प्रतिपादिताः। यद्यप्याधुनिका 'हाइड्रोजन्', 'आक्सीजन्' नाम्ना पदार्थद्वयं जले प्रतिपादयन्ति, मन्ये तदेवाभीप्सितं स्यान्मेध्यपवित्रशब्दाभ्यां याज्ञवल्क्यस्य। इयमासीद् ऋषीणां सूत्ररूपेण प्रतिपादनशैली। विविधार्थगर्भे ऋग्वेदे प्रतिपादितानामर्थानां सङ्कलनं बृहद्देवताकारः शौनकः कृतवान्। स हि प्रोचे—

मन्त्रा नानाप्रकाराः स्युर्दृष्टा ये मन्त्रदर्शिभिः।
स्तुत्या चैव विभूत्या च प्रभावाद् देवतात्मनः॥
स्तुतिः प्रशंसा निन्दा च संशयः परिदेवना।
स्पृहाशीः कत्थना याच्ञा प्रश्नः प्रैषः प्रवह्लिका॥
नियोगश्चानुयोगश्च श्लाघा विलपितं च यत्।
आचिख्यासाऽथ संलापः पवित्राख्यानमेव च॥
आहनस्या नमस्कारः प्रतिरोधस्तथैव च।
संकल्पश्च प्रलापश्च प्रतिवाक्यं तथैव च॥

प्रतिषेधोऽपदेशौ च प्रमादापह्नवौ च ह।
उपप्रैषश्च यः प्रोक्तः संज्वरो यश्च विस्मयः॥
आक्रोशोऽभिष्टवश्चैव क्षेपः शापस्तथैव च। इति।

परं श्रीमदोझामहाभागाः सम्पूर्णे संहिताब्राह्मणारण्यकोपनिषदात्मके वैदिकसाहित्येऽनवरतं परिश्राम्यन्तो निश्चिक्युर्यद्वेदे चत्वारोऽर्थाः प्रतिपादिताः। ते च—

यज्ञोऽथ विज्ञानमथेतिहासः स्तोत्रं तदित्थं विषया विभक्ताः।
वेदे चतुर्धा त इमे चतुर्भिर्ग्रन्थैः पृथक्कृत्य निरूपणीयाः॥

इति वेदे प्रतिपादितार्थस्य चतुर्धा विभागमभिप्रयन्ति। एवञ्च वैदिकविज्ञानस्यान्तर्गता निम्नलिखिता विभागा इष्यन्ते—

१. ब्रह्मविज्ञानम्, सृष्टिविज्ञानम्, मूलविज्ञानम्।
२. यज्ञविज्ञानम्।
३. इतिहासविज्ञानम् (पुराणानि)।
४. स्तोत्रविज्ञानम्।

अन्ते च—

मनीषिमान्याः! सुविचार्य वर्या युक्तीः समस्ता अवधारयन्तु।
क्षुण्णे तदित्थं पथि संचरन्तो मार्गं परिष्कारमिमं नयन्तु॥

ओं पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥

॥ ॐ शान्तिः ३ ॥



# भारतीयग्रहगणिते यावनप्रभावसमीक्षा

श्रीमुरारिलालशर्मा, वा० सं० वि० वि० ज्यौतिषशास्त्रव्याख्याता ।

१. भारतीय-ज्यौतिषशास्त्रस्य ग्रहानयनविधिः प्रायशो यवनानां ( Greeks ) ग्रहानयनविधिना साम्यं भजते । यथा—

( १ ) स्पष्टग्रहानयनाय मन्दशीघ्रफलानयनार्थं प्रतिवृत्तानां मन्दशीघ्रपरिधीनां च कल्पना यथा भारतीये सिद्धान्तज्यौतिषे वर्तते, तथा ग्रीकदेशीयटालमीमहोदयस्य 'सिंटेक्सिस्' नामके ग्रन्थे समुपलभ्यते ।

( २ ) उभयत्रापि सिद्धान्ते मध्यमौ बुधशुक्रौ मध्यमरवितुल्यौ स्वीकृतौ रविकेन्द्रिकौ, वास्तवमध्यमग्रहौ च तयोः शीघ्रोच्चत्वेन प्रतिपादितौ । मन्दफलसंस्कारोऽपि मध्यमरवावेव दीयते ।

( ३ ) दीर्घवृत्तस्य स्थाने वृत्तमेव ग्रहकक्षारूपत्वेन स्वीकृतम् ।

( ४ ) शीघ्रकेन्द्रं च प्रायो मध्यमादेव रवेर्गृहीतं न तु मन्दस्पष्टात् ।

( ५ ) बहिर्ग्रहाणां कक्षायाः केन्द्रं रविस्थाने भूः स्वीकृतम् । अत्रापि शीघ्रोच्चं मध्यम एव रविर्न तु मन्दस्पष्टः ।

भारतीययवनपद्धत्योर्वैषम्यमपि किञ्चिद् वर्तते, यत् प्रसङ्गानुसारं वक्ष्यते ।

२. टालमीमहोदयस्य ग्रन्थरचनाकाल ईशवीय १५०तमो वर्षो वर्तते । भारतीयानामिदानीन्तना ये सिद्धान्तज्यौतिषशास्त्रस्य ग्रन्थाः समुपलभ्यन्ते, तेषां रचनाकालश्च ४२० शकादारभ्य स्वीक्रियते । भारतीयविधिनाऽयनांशगणनयापि यो मेषादिः समायाति, सोऽपि ३४२ शकात् ५२७ शकपर्यन्तेषु[1] वर्षेषु समायाति ।

३. वैदिककालादारभ्येशवीयसंवत्सरस्यारम्भकालपर्य्यन्तं निर्बाधरूपेण वहमाना ज्यौतिषसरितो धारा ईशवीयसंवत्सरस्य १०० वर्षात् ४०० वर्षपर्यन्तं खण्डिता वर्तते । ततः पश्चात्तु सिद्धान्तग्रन्थरूपेण पूर्णरूपेण विकसिता वर्तते ।

---

१. भारतीय ज्यौतिष, पृ० ४४४-४४५

४. एतद् विलोक्य वेवर-ह्विटने-थीवोप्रभृतीनां पाश्चात्यविदुषां पाश्चात्यविद्याप्रभावितानां केषाञ्चिद् भारतीयानां च मतमिदं यदीशवीयसंवत्सरस्य १०० वर्षादारभ्य ४०० वर्षाभ्यन्तरे भारते यवनानां बेबीलोनियानिवासिनां च ज्यौतिषशास्त्रस्य प्रवेशो जातः[१]। तेषां चेमे स्वपक्षपोषकास्तर्काः—

(१) यावनज्यौतिषशास्त्रे वेधक्रियाया महत्त्वं पूर्वाचार्यैः संकलितानां वेधोपलब्धीनां संरक्षणं चोपलभ्यते, येषां साहाय्येन ते कालान्तरोपलब्धफलैः सह तुलनां कृत्वा ग्रहगणितस्य प्रक्रियाया विशेषतश्च प्रतिवृत्तभङ्गेर्नीचोच्चभङ्गेश्चाविष्कारमकुर्वन्।

(२) भारतीयप्राचीनतमे साहित्ये नक्षत्राणां तेषां वेधोपलब्धभोगशरादीनां च वर्णनं दृश्यते, पञ्चतारकाणां वर्णनमपि वैदिके साहित्ये न दृश्यते। अतो भारतीया वेधक्रियायां कुशला नासन्। यतो हि नक्षत्रवेधसंलग्नः पुरुषो महाद्युतिमतामतिगतिमतां च ग्रहाणां ज्ञानं सद्यः कर्तुमर्हति। वेधोपलब्धफलसंग्रहस्य तेषां ग्रन्थेष्वदर्शनात् तेषां वेधे प्रवृत्तिर्न दृश्यते। ते तु सौरचान्द्रगणिते सौरचान्द्रमासयोः परस्परसम्बन्धान्वेषणे संतुष्टाः प्रतिवृत्तभङ्गेर्नीचोच्चभङ्गेश्चाविष्कारं कर्तुमसमर्था आसन्।

(३) अद्यत्वे यत् सिद्धान्तज्यौतिषशास्त्रमुपलभ्यते तस्यारम्भ ईशवीयसंवत्सरस्य पञ्चमशतकासन्ने काले जात एतत्तथ्यं तेभ्य एव ग्रन्थेभ्यः समानीतेन निरयणवर्षेण सम्यग् ज्ञायते। इदं ज्यौतिषशास्त्रं सर्वथा सम्पूर्णं ग्रहगणितस्य च वास्तवज्ञानं संपादयति। तादृशस्य ज्ञानस्य प्राचीनग्रन्थेषु दर्शनं नास्ति। प्रतिवृत्तानां परिधिवृत्तानां च कल्पनापि सर्वथा नवीनयवनगणितपद्धतिसदृशी। अतो यवनानां सकाशादेव भारतीयैरिदं ज्ञानमुपलब्धम्।

(४) प्राचीनभारतीयग्रन्थेषु क्रान्तिवृत्तस्य सप्तविंशतिविभागास्तु दृश्यन्ते, परं तस्य द्वादशराशिरूपेण मेषादयो विभागा न सन्ति। एवमेव सप्तवाराणामुपलब्धिरपि नूतनेष्वेव ग्रन्थेषु दृश्यते। यवना एव मेषादिराशिविभागस्य प्रवर्तका आसन्। वारप्रवृत्तिरपि तेषामेव ग्रन्थेष्व-

---

1. P. C. Sen-gupta :—Thus from 100 to 400 A. D. we have a great gap of three hundared years in which Astronomical knowledge from Bebilonia and Greece came to India—Introduction to Bergess's translation of Surya siddahnta

वलोक्यते । अतो भारतीयैर्यवनानामेव सकाशान्मेषादिविभागस्य वारगणनाप्रकारस्य च ग्रहणं कृतं भविष्यति ।

(५) भारतीयज्यौतिषग्रन्थेषु 'केन्द्र'-'लिप्ता'-'होरा'-प्रभृतयः शब्दा यवनभाषायाः सन्ति । एतेनाप्येतदेव व्यज्यते यद् भारतीयैः सिद्धान्तज्यौतिषशास्त्रस्य वर्तमानं स्वरूपं यवनानां सकाशादधिगतम् ।

(६) सूर्यसिद्धान्तस्य मध्यमाधिकारे मयनामकोऽसुरस्तपश्चर्यया सूर्याज्ज्यौतिषज्ञानमुपलभते[1] । अथ यदा ऋषिभिर्ज्ञातं यदेतेनासुरेण सूर्यसकाशाद् ज्यौतिषं ज्ञानमधिगतं तदा ते तं समुपेत्य तस्माद् ग्रहज्ञानं पृच्छन्ति[2] ।

अथ—

स तेभ्यः प्रददौ प्रीतो ग्रहाणां चरितं महत् ।
अत्यद्भुततमं लोके रहस्यं ब्रह्मसंमितम् ॥

(सू० सि० मा० अ० २७ श्लोके)

वेवरमहाशयमतेन ईजिप्टदेशस्य तालमयसनामा नृपतिरेव भारतवर्षे संस्कृतभाषायां तुरुमयनाम्ना प्रसिद्धः । स एव पश्चादसुरमय इति भारतवर्षे प्रसिद्धः । अतः 'टालमी'-नामकगणकग्रन्थस्यानुवाद एवायं सूर्यसिद्धान्तः[3] । अथ चास्य पोषकं श्लोकान्तरं तत्र दृश्यते—

रोमके नगरे ब्रह्मशापान्म्लेच्छावतारधृक् ।
मदंशः पुरुषोऽयं ते निःशेषं कथयिष्यति ॥

अथ चान्यदपि श्रूयते—

म्लेच्छा हि यवनास्तेषु सम्यक् शास्त्रमिदं स्थितम् ।
ऋषिवत्तेऽपि पूज्यन्ते किं पुनस्तत्त्वविद् द्विजः ॥

---

१. तोषितस्तपसा तेन प्रीतस्तस्मै वरार्थिने ।
ग्रहाणां चरितं प्रादान्मयाय सविता स्वयम् ॥ (सू० सि० म० अ० ४ श्लो०)

२. ज्ञात्वा तमृषयश्चापि सूर्यलब्धवरं मयम् ।
परिवव्रुरुपेत्याथो ज्ञानं पप्रच्छुरादरात् ॥ (सू० सि० मा० अ० २६ श्लोके)

३. म० म० पण्डितसुधाकरद्विवेदिनः सुधातरङ्गिण्याः संस्कृतभूमिकायाम् ।

इत्यादिवाक्यानि चैतत् प्रकटयन्ति यत् सिद्धान्तज्यौतिषशास्त्रं भारतीयैर्यवनानां सकाशादुपलब्धमिति ।

५. पूर्वपक्षरूपेणोपनिबद्धस्य मतस्येदानीं समीक्षा क्रियते । अत्र ( १ ) संख्यकतर्केणैतत्तु ज्ञायते यद् यवनैः स्वतन्त्ररूपेण प्रतिवृत्तभङ्गेर्नीचोच्चपरिधिवृत्तानां च ज्ञानं कृतम्, परं तेन नैतदधिगम्यते यत्तादृक्प्रकारान्तरेणान्योऽपि कश्चिद् ज्ञानं प्राप्तुं न शक्नोति । तेन त्वेतन्नितरां सुस्पष्टं जायते यद् वेधादिक्रियासु निपुणैरन्यैरपि जनैस्तादृग्रीत्यैव तज्ज्ञानं समधिगन्तुं शक्यते । अतः पूर्वपक्षिणां तर्कस्य मुख्याधारौ ( २ ) ( ३ ) संज्ञकौ । यतो ग्रहस्पष्टीकरणं भारतीयैः प्रतिवृत्तैर्नीचोच्चभङ्गिभिश्च संपाद्यते । तस्य तैः स्वयमेव ज्ञानं कृतमिति प्रतिपादनेन स्पष्टमिदं भविष्यति यद् भारतीया एव सिद्धान्तज्यौतिषशास्त्रस्य मूलप्रवर्तका आसन्, यथा ( १ ) संख्यके तर्के प्रतिपादितं यद् वेधक्रियया वेधप्रतिफलितार्थानां च संग्रहेण ग्रहगणितस्य सूक्ष्मतत्त्वानां ज्ञानं संपाद्यते । ह्विटनेमहाशयेन भारतीयगणकानां वेधाक्षमतां प्रकल्प्यैव मन्दफलशीघ्रफलानयनप्रकाराणामाविष्कारस्य यशो यवनेभ्यः प्रदत्तमिति कृत्वा सर्वप्रथमं भारतीयानां वेधज्ञानयोग्यतायां विचारः क्रियते ।

६. वेदेषु या यज्ञक्रिया विहितास्ता विशेषप्रकारेण निर्मितेषु कुण्डेषु संपादनीया भवन्ति । कुण्डनिर्माणार्थमत्यन्ता सूक्ष्मताऽपेक्ष्यते, अन्यथा नरो महापापभाग् भवतीति प्रतिपादितम्[1] । अतः कुण्डादिनिर्माणे धर्मविरुद्धाचरणभीत्या तैः सूक्ष्मावलोकनं रेखागणिताङ्कगणितयोश्च ज्ञानं समुपलब्धम् । अतो ये पाश्चात्त्या एवं वदन्ति यद् भारतीयानां सूक्ष्मनिरीक्षणशक्तिर्नासीत्तन्न समीचीनम् । अथ तयैव सूक्ष्मनिरीक्षणशक्त्या भारतीयैर्ग्रहनक्षत्राणां वेधं कृत्वा समयज्ञानं कृतम् । विभिन्नानां यज्ञक्रियाणां साफल्यार्थमुचितस्य कालस्य निर्देशः कृतः । रवेर्वेधेन दिनविभागानां मुहूर्तानां विषुवतः षण्णामृतूनां संवत्सरस्य च ज्ञानं कृतम् । तद्विषयिका बह्वयः श्रुतयः सन्ति । कस्यचिदपि नात्र संदेह इति कृत्वा प्रमाणानामपेक्षा नास्ति । चन्द्रस्य वेधेन तिथीनाममान्तस्य पूर्णिमान्तस्य चन्द्रमासानां च ज्ञानं कृतम् । सूर्यचन्द्रयोर्वेधपरैस्तैर्ग्रहणानामपि

---

१. पुरश्चर्यार्णवे—

वक्ररेखात्मके कुण्डे यो जुहोति नरोऽधमः ।
तस्य प्राणो धनं पुत्रो जाया भाग्यं च नश्यति ॥

पण्डितगङ्गाधरमिश्रद्वारा सिद्धान्ततत्त्वविवेकटीकायां कुण्डप्रकरणे उद्धृतम् ।

ज्ञानं संप्राप्तम्। ग्रहणविषये बहूनि मन्त्राणि सन्ति। राहोस्तम इति संज्ञा। ऋग्वेदसंहितायाः "यत्त्वा सूर्य" (५।४०) इत्यादिमन्त्रे खग्रासस्य वर्णनं वर्तते। तत्र काचिदपि बिभीषिका न प्रदर्शिता। अनेनैतज्ज्ञायते यदृग्वेदकालेऽपि भारतीया ग्रहणस्य कारणानि जानन्ति स्म। अन्यत्रापि बहुत्र स्थले ग्रहणानां चर्चा विद्यते वेदे। वेदेषु नक्षत्राणां चर्चाऽपि बहुत्र विद्यते। तैत्तिरीयसंहितायां ४।४।१० मन्त्रे नक्षत्राणां नामानि तेषां देवताश्च निर्दिष्टाः सन्ति। तत्र सप्तर्षीणां ध्रुवस्य च वर्णनमपि लभ्यते। ऋग्वेदसंहितायां १०।६३।१० मन्त्रे व्याधतिष्ययोर्मध्ये वर्तमानयोर्नक्षत्रयोः श्वानसंज्ञयोर्वर्णनं लभ्यते। ऐतरेयब्राह्मणस्य १३।९ मन्त्रे रोहिणीमृगशीर्षनक्षत्रयोः कथामयं वर्णनं वर्तते। तैत्तिरीयब्राह्मणस्य १।१।१०।६ मन्त्रे, १।१।२ मन्त्रे च रोहिणीनक्षत्रस्य रोहिणीत्वं प्रतिपादितम्। अन्यत्रापि वेदेषु नक्षत्राणां तादृशमेव वर्णनं वर्तते यथा तेषां स्थितिः। अन्वर्थकानि च तेषां नामानि लभ्यन्ते वेदेषु, यथा सप्तर्षिमृगशीर्षव्याधहस्तप्रभृतिभिः शब्दैः सम्यक् प्रतीयते। वर्षारम्भकालस्तु वेदेषु विषुवदिनादारभ्यते, तदैव च ऋतूनामारम्भः। अत एव विषुवदिनस्य वसन्तपातसंज्ञा कृता—

"मुखं वा एतदृतूनां यद् वसन्तः" ( तै० ब्रा० १।१।२।६।७ )। एवं च—

"मुखं वा एतत् संवत्सरस्य यत् फाल्गुनी पौर्णमासी मुखमुत्तरे पुच्छं पूर्वे" इति।

एवं चन्द्रनक्षत्रवेधेन वेदकाले वसन्तपातस्य गणना क्रियते स्म। अयनचलनत्वाद् वसन्तपातोऽपि चलति। विषुवदिनज्ञानाय वर्षारम्भकालो विभिन्नेषु नक्षत्रेषु यथा यथा प्रावर्तत तथा तथा तत्र तत्र मन्त्रा उपलभ्यन्ते। अथैतेन "प्रज्ञानाय नक्षत्रदर्शम्" ( वा० सं० ३०।१० ) इत्यनेन चैतज्ज्ञायते यद् वैदिककालत एव भारतीया वेधक्रियायां निपुणा आसन्।

शुक्रः सदैव रविसमीप एव दृश्यते। अपरोऽप्रकाशवद्ग्रहो बृहस्पतिर्भुवं परितो भ्रमतीत्यस्य कल्पना ऋग्वेदे दृश्यते। यथा—

ईमान्यद् वपुषे वपुश्चक्रं रथस्य येमथुः।
पर्जन्या नाहुषा युगामह्वा रजांसि दीयथः॥ इति।

यदा भारतीयैः प्रथमं गुरोर्वेधः कृतस्तदा स पुष्यनक्षत्रे दृष्टः—

"बृहस्पतिः प्रथमं जायमानो तिष्यं नक्षत्रमभिसम्बभूव" ( तै० ब्रा. ३।१।१ )। इयं परम्परा महाभारतेऽपि दृश्यते। यथा ग्रहयुद्धवर्णनम्—

ततः समभवद् युद्धं शुक्राङ्गिरसवर्चसोः ।
नक्षत्रमभितो व्योम्नि शुक्राङ्गिरसयोरिव ॥

( कर्णपर्वणि १८ अध्याये )

अथैवमेव ग्रहयुतिवर्णनं शल्यपर्वण एकादशाध्याये—

"भृगुसूनुधरापुत्रौ शशिजेन समन्वितौ" इति ।

एवमेवोद्योगपर्वणः १४३ अध्याये महाभारतीययुद्धकालस्य नक्षत्रपरका वेधोपलब्धा स्थितिर्वर्णिता । कर्णवधस्य ग्रहस्थितिवर्णनं यथा—

"बृहस्पतिः संपरिवार्य रोहिणी बभूव चन्द्रार्कसमो विशांपते" इति । शल्यपर्वणि च तस्य वधकाले—"भृगुसूनुधरापुत्रौ शशिजेन समन्वितौ" इति ग्रहस्थितिः प्रदर्शिता ।

एवं महाभारते वर्तमानसिद्धान्तग्रन्थानां सर्वेऽपि विषयाः समुपलभ्यन्ते । महाभारते च राशीनां मेषादिनामोपलब्धेरभावात्तत्र संख्यार्थे नन्दशब्दस्यानुपलब्धेश्च महाभारतं चन्द्रगुप्त-शासनात् पूर्वमेव रचितमित्यवगम्यत इति पण्डितशङ्करबालकृष्णदीक्षितमहोदयानां मतम् । अतो भारते यवनप्रवेशात् पूर्वमेव भारतीयैर्वेधक्रियया ग्रहगणितस्य ज्ञानं समधिगतमासीत् ।

वेधक्रियाया माहात्म्यं सूर्यसिद्धान्तेऽपि प्रतिपादितम् । भग्रहयुत्यधिकारे नक्षत्राणां ध्रुवकान् शरांश्च पठित्वा—

"गोलं बद्ध्वा परीक्षेत विक्षेपध्रुवकं स्फुटम्"[1] इति प्रतिपादितम् ।

अथ नक्षत्राणां ध्रुवका अपि भिन्ना उपलभ्यन्ते यथा—

| | पञ्चसिद्धान्तिका | ब्रह्मस्फुटसिद्धान्तः |
|---|---|---|
| कृत्तिका | ३२° ४०′ | ३७° २८′ |
| पुनर्वसुः | ८८° ००′ | ९३° ०३′ |
| मघा | १२६° ००′ | १२९° ००′ |
| चित्रा | १८०° ५०′ | १८३° ००′ |

अनेन, अथ च सिद्धान्तज्यौतिषशास्त्रे मन्दशीघ्रपरिधीनामन्येषां च पदार्थानां भिन्नत्व-दर्शनेन भारतीया वेधकुशला आसन्निति ज्ञायते ।

---

१. सू. सि. भग्र. यु. अ. १२ श्लोके ।

## भारतीयग्रहगणिते यावनप्रभावसमीक्षा

वराहमिहिरेण बृहत्संहितायास्तृतीयाध्यायस्य प्रथमश्लोके तदानीन्तनानयनप्रवृत्तिपरकोपलब्धिरेवं लिखिता—

आश्लेषार्द्धाद्दक्षिणमुत्तरमयनं रवेर्धनिष्ठाद्यम्।
नूनं कदाचिदासीद् येनोक्तं पूर्वशास्त्रेषु ॥

इयं वेधप्रणाली सर्वत्रोपलभ्यते ज्यौतिषशास्त्रे। तत्र च बहूनि वेधयन्त्राणि प्रतिपादितानि। यदा वेधवशात् पूर्वमानात् किञ्चिदन्तरं दृश्यते तस्य गणना कृता, पूर्वमानेषु च संशोधनं कृतम्। अयनांशविषये ब्रह्मगुप्तेन किञ्चिदपि न लिखितम्। परं तन्मुञ्जालादीनां ग्रन्थेषु दृश्यते। अस्य विषये भास्करेण लिखितम्—"तदा स्वल्पत्वात्तैर्नोपलब्धः, इदानीं बहुत्वात् साम्प्रतिकैरुपलब्धः[1]" इति। तत्रैव च ज्यौतिषशास्त्रस्य विकासपरम्पराया ज्ञानमप्युपलभ्यते। सा चैवमासीत्। यदि कश्चिन्नूतनोऽर्थो वेधादधिगतस्तर्हि तं स्वीकृत्य कश्चिदाचार्यः स्वग्रन्थे तं लिखति स्म। महति काले गते तत्रान्तरवशतस्तस्य पदार्थस्य सम्यग्गतेर्ज्ञानाद् वास्तविकतत्त्वावबोधो भवति स्मेति। यथाह भास्कराचार्यः—"साम्प्रतिकोपलब्ध्यनुसारिणी कापि गतिरङ्गीकर्तव्या। यदा पुनर्महता कालेन महदन्तरं भविष्यति तदा महामतिमन्तो ब्रह्मगुप्तादीनां समानधर्माण एवोत्पत्स्यन्ते। ते तदुपलब्ध्यनुसारिणीं गतिमुररीकृत्य शास्त्राणि करिष्यन्ति। अत एवायं गणितस्कन्धो महामतिमद्भिर्धृतः सन्ननाद्यन्तेऽपि काले खिलत्वं न याति[2]"इति। एवं विचारेण स्पष्टमिदं यद् ह्विट्नेमहोदयस्यान्येषां चायमारोपो यन्नूतनसिद्धान्तसंपादनार्थमपेक्षिता वेधयोग्यता भारतीयेषु नासीदिति निराधारस्तेषां यवनेषु पक्षपातद्योतकश्च।

६. अथ ज्यौतिषशास्त्रे नूतनाविष्कारार्थमपेक्षितानामन्येषां पदार्थानां विचारः क्रियते। अस्मिन् शास्त्रे नूतनचमत्कारोत्पादनाय गणितस्य ज्ञानमपेक्ष्यते। वैदिकक्रियाणां यज्ञादीनां संपादनाय कुण्डादिनिर्माणकुशलैर्भारतीयैर्ज्यामितितत्त्वानां ज्ञानमधिगतमासीत्। यद्येतन्न स्वीक्रियते तथाप्येतत्तु स्वीकर्तव्यं भविष्यति यद् भारतीयानां जात्यत्रिभुजगणितस्य सम्यग्ज्ञानमासीत्तस्य शुल्वसूत्रेषु दर्शनात्। भारतीयैः प्रायः सर्वत्र जात्यत्रिभुजसाजात्येनैव सर्वं ग्रहगणितं प्रदर्शितम्। अतो भारतीयसिद्धान्तापेक्षितस्य ज्यामितेर्ज्ञानं तेषामासीदिति नात्र कस्यचित् संदेहः। अङ्कगणितस्याविष्कारकास्तु भारतीया एवेति सर्वेऽपि स्वीकुर्वन्ति। अर्द्धज्याभिस्त्रिकोणमितिगणितं भारतीयैरेवाविष्कृतं यस्य स्वरूपान्तरमाधुनिकं त्रिकोणमितितन्त्रम्। नवीना अपि

---

१–२. सि. शि. गोलबन्धाधिकारे १७–१६ श्लोकानां वासनाभाष्ये।

एतस्याविष्कारकमार्यभटं मन्यन्ते। आर्यभटात् पूर्वतराणां ग्रन्थानामनुपलब्धेः श्रेय आर्यभटायैवायाति, अन्यथा तस्य ज्ञानं तु ततः पूर्वमप्यासीदित्यनुमीयते। यवना अङ्कविद्यां न जानन्ति स्म। तेषां त्रिकोणमितितन्त्रेऽपि पूर्णज्याभिरेव ज्यानयनपद्धतिराश्रिता। इयं ज्यापद्धतिः स्थूला भवति। एवं विधिना विचारेऽपि ज्यौतिषशास्त्रे नूतनाविष्कारयोग्यता भारतीयेषु यवनानामपेक्षयाऽधिकासीत्।

८. अथ चेत् स्वीक्रियते यद् भारतीयैः सिद्धान्तज्यौतिषज्ञानं यवनानां सकाशाद् गृहीतम्, तर्हि तत्रापि विचारः क्रियते। यवनेषु हिपार्कस् ( ई० पू० ३५० )महोदयात् पूर्वं ग्रहगणितस्य सम्यग्ज्ञानं नासीत्। अयमेव ग्रहगणितस्य मुख्यतोऽन्वेषकः स्वीक्रियते। तस्य कश्चिदपि ग्रन्थो न लभ्यते येन सह भारतीयग्रन्थानां तुलना क्रियेत। तथापि कथ्यते यदस्य प्रतिपादितां पद्धतिमनुसृत्य टालमीमहोदयेन स्वीयः सुप्रसिद्धः 'सिंटेक्सिस्'-नामको ग्रन्थो लिखितोऽस्ति। अतस्तेनैव भारतीयग्रन्थानां तुलना क्रियते। यदि भारतीयैः टालमीमहोदयात् प्रेरणा गृहीताऽभविष्यत् तर्हि तस्योपलब्धयस्तस्य विधयश्च तैः सादरं गृहीता अभविष्यन्। प्रथमं तावदुपलब्धिषु विचारः क्रियते। अधस्तने चक्रे तुलना[1] कृता वर्तते—

[1] पी० सी० सेनगुप्तद्वारा बर्जेसकृतसूर्यसिद्धान्तटीकाया भूमिकायामुद्धृतचक्रात् संगृहीतम्।

| पदार्थः | (१) आधुनिकं मानम् (मध्यमम्) | (२) आर्यभटीये | (३) खण्डखाद्यके | (४) ब्रह्मस्फुटसिद्धान्ते | (५) टालमीमानम् |
|---|---|---|---|---|---|
| १. नाक्षत्रवर्षः (दिनात्मकः) | ३६५.२५६३६०४, | ३६५.२५८६८०५ | ३६५.२५८७५ | ३६५.२५८४३७५, | ३६५.२६३१५७९ (मेटन द्वारा) |
| २. आर्तववर्षः | ३६५.२४२१९८८ | — | — | — | ३६५.२४६[1] |
| ३. सूर्योच्चम् (अंशादिकम्) | १०१°—१३ (ई० सं १९००) | — | — | — | — |
| | ७७° १९′ | ७८° | ८०° | ७७° | |
| | (ई० सं० ५००) | (ई० सं० ४९९) | (ई० सं० ४९९) | (ई० सं० ४९९) | ६५° ३०′ |
| ४. रवेः परमं मन्दफलम् | १°५५′१०″ | २°८′५४″ | २°१४′ | २°७′२०″ | २°२३′३″ |
| ५. चान्द्रमासः (दिनात्मकः) | २९.५३०५८८१ | २९.५३०५८२ | २९.५३०५८७४ | २९.५३०५८२ | २९.५३०५९२७ |
| ६. चन्द्रोच्चस्य नाक्षत्रभगणपूर्तिकालो दिनात्मकः | ३२३२.३७५४३ | ३२३१.९८७०७९ | ३२३१.९८७८४४ | ३२३२.७३४११ | ३२३२.६१७६५६ |

---

१. टालमीमहोदयस्यायनगतिः =३६″, भारतीयानां च=५६″

| | | | | | |
|---|---|---|---|---|---|
| ७. चन्द्रपातस्य नाक्षत्रभगणपूर्तिकालो दिनात्मकः | ६७९३.३९१०८ | ६७९४.७४९५११ | ६७९४.७५०८३४ | ६७९२.२५३९६ | ६७९६.४५५७१ |
| ८. चन्द्रपरमविक्षेपः | ५°८′४३″ | ४°३०′ | ४°३०′ | ४°३०′ | ५° |
| ९. चान्द्रं परमलम्बनम्[१] | ५७′२०.७९ | ५२′३०″ | ५२′४२″ | ५१′४२.३″ | ५३′२४″ |
| १०. सूर्यस्य परमलम्बनम् | ०′८.८०६″ | ३′५६.५″ | ३′५६.५″ | ३′५६.५″ | २′५७″ |
| ११. चन्द्रबिम्बव्यासार्धम् | १५′३३″ | १५′४५″ | १६′०.३२″ | १६′०.३२″ | १७′४०″ |
| १२. रविबिम्बव्यासार्धम् | १६′१.३″ | १६′२९.४″ | १६′१५″ | १६′१५″ | १५′४० |
| रविसंयुतिः | | | | | |
| भौमस्य | ७७९.९३६ | ७७९.९२११ | ७७९.९२१२ | ७७९.९२२२ | ७७९.९४२८ |
| बुधस्य | ११५.८७७ | ११५.८७६१ | ११५.८७८५ | ११५.८७८४ | ११५.८७८६ |
| गुरोः | ३९८.८६७ | ३९८.८८९५ | ३९८.८८६७ | ३९८.८८९५ | ३९८.८८६४ |
| शुक्रस्य | ५८३.९२० | ५८३.८९७५ | ५८३.८९७६ | ५८३.८९६८ | ५८४.००० |
| शनेः | ३७८.०९० | ३७८.०८५९ | ३७८.०८६० | ३७८.०८६० | ३७८.०९३० |
| | ( लाकयेर ) | | | | |

---

१. भारतीयपरमलम्बनं गतेः पञ्चदशांशतुल्यं स्वीकृत्य ।

ग्रहाणां मन्दोच्चम्[१] ( ५०० ई० सं० )

| | ( मध्यममानम् ) | ( ४९९ ई० सं० ) | ( ४९९ ई० सं० ) | ( ४९९ ई० सं० ) | 'बर्जेसपरिशिष्टम्' |
|---|---|---|---|---|---|
| भौमस्य | १२८°२८′ | ११८° | ११०° | १२७° | १०६°४०′ |
| बुधस्य | २३४°११′ | २१०° | २२०° | १२७° | १८१°१०′ |
| गुरोः | १७०°२२′ | ११८° | १६०° | १७०° | १५२°९′ |
| शुक्रस्य | २९०° ४′ | ९०° | ८०° | ९०° | ४६° १०′ |
| शनेः | २४३° ४०′ | २३६° | २४०° | २५२° | २२४° |

ग्रहाणां पाताः[२] ( ५०० ई० सं० )

| | ( मध्यममानम् ) | ( ४९९ ई० सं० ) | ( ४९९ ई० सं० ) | ( ४९९ ई० सं० ) | 'बर्जेसपरिशिष्टम्' |
|---|---|---|---|---|---|
| भौमस्य | ३७° ४९′ | ४०° | ४०° | ३८°३५′ | २५° ३०′ |
| बुधस्य | ३०° ३५′ | २०° | २०° | — | १०° |
| गुरोः | ८५° १३′ | ८०° | ८०° | ८२° २′ | ५१° |
| शुक्रस्य | ६३° १६′ | ६०° | ६०° | — | ५५° |
| शनेः | १००° ३२′ | १००° | १००° | १०३° १४′ | .१८३°०′ |

---

१. टालमीमते मन्दोच्चगतेरभावेन तस्य ३६″ तुल्येनायनांशेन केवलेन तस्य महतः स्थौल्यस्य समाधानं न जायते ।

२. टालमीमतेन पातगतेरभावेनायनांशसम्बन्धिना ४°३०′ अन्तरेण नास्य स्थौल्यस्य समाधानं वर्तते ।

| ग्रहाणां परममन्दफलानि[1] | | | | | |
|---|---|---|---|---|---|
| सूर्यस्य | १° ५५′ २७″ | २° ८′ ५५″ | — | — | २° २३′ १″ |
| चन्द्रस्य | ६° १७′ १२″ | ५° ०′ ४८″ | — | — | ५° १′ ६″ |
| भौमस्य | १०° ४१′ ३३″ | १०° १′ ३६″ | — | — | ११° ३२′ १०″ |
| बुधस्य[2] | २३° ४०′ ४३″ | ५° ०′ ४८″ | — | — | २° ५२′ २३″ |
| गुरोः | ५° ३१′ १४″ | ५° ०′ ४८″ | — | — | ५° १६′ |
| शुक्रस्य | ०° ४७′ ११″ | २° ५१′ ५३″ | — | — | २° २३′ ०″ |
| शनेः | ६° २६′ १२″ | ६° २६′ ४५″ | — | — | ६° ३२′ ६″ |
| **ग्रहाणां शीघ्रपरिधयः** | ( मध्यममानेन ) | | | | |
| भौमस्य | २३६° १६′ ४·८″ | २२९° ३०′ तः २५६° ३०′ | २३४° | २४३° ४०′ | २३७° |
| बुधस्य | १३९° २१′ २१·६″ | १३०° ३०′ तः १३९° | १३२° | १३२° | १३५° |
| गुरोः | ६९° ५′ २·४″ | ६७° ३०′ तः ७०° | ७२° | ६८° | ६९° |
| शुक्रस्य | २६०° २३′ १६″·८ | २६५° ३०′ तः २५६° ३०′ | २६०° | २५८° | २५९° |
| शनेः | ३७ ४३′ ४०″·८ | ३६° ३०′ तः ४०° | ४०° | ३५° | ३९° |

---

१. भारतीय ज्यौतिष, पृ. ४८०

२. अत्र बुधशुक्रयोराधुनिकं मन्दफलं रविकेन्द्रिककक्षापरम्, अतो भारतीयमानेन तुलनार्हम् ।

एष्वन्तिमफलानि मया स्वयं समानीतानि[1]।

अस्य चक्रस्य सम्यगध्ययनेनेमे प्रतिफलन्त्यर्थाः—

(१) ज्यौतिषसिद्धान्तस्याधारभूतानीमानि मानानि भारतीयैः टालमीमहोदयान्न गृहीतानि। यतस्तत्र क्वापि साम्यं नास्ति।

(२) बहुत्र स्थले भारतीयानां मानं टालमीमानापेक्षया सुसूक्ष्मं येनैतन्नितरां सुस्पष्टं भवति यद् भारतीया वेधकलायां निपुणा आसन्।

---

१. (१) तुलनार्थमाधुनिकमतानि मया कुत्रचिदपि न दृष्टानि। अतो मद्रचिताया ग्रहगणितमीमांसाया द्वितीयाध्यायस्य २१ प्रक्रमेरीत्या स्वयमेव समानीतानि यथा भू र ग्र त्रिभुजे

(१) अन्तर्ग्रहयोः $\frac{\text{र ग्र}}{\text{भू र}} = \frac{\text{ज्या} \angle \text{र भू ग्र}}{\text{ज्या} \angle \text{र ग्र भू}} \therefore \text{ज्या} \angle \text{र भू ग्र} = \frac{\text{र ग्र} \times \text{ज्या} \angle \text{र ग्र भू}}{\text{भू र}}$

ज्या $\angle$ र भू ग्र मानं परमं यदा $\angle$ र ग्रभू $= 90^\circ$

$\therefore$ ज्या $\angle$ र भू ग्र $= \frac{\text{र ग्र}}{\text{भू र}}$ वा ज्या परमशीघ्रफलम् $= \frac{\text{र ग्र}}{\text{भू र}}$

बुधस्य र ग्र = ·३८७१...(१)

शुक्रस्य = ·७२३३...(२)

भू र = १.

बुधशीघ्रान्त्यफलज्या = ·३८७१

शुक्रशीघ्रान्त्यफलज्या = ·७२३३

(२) बहिर्ग्रहाणाम्—

$\frac{\text{भू र}}{\text{र ग्र}} = \frac{\text{ज्या} \angle \text{र ग्र भू}}{\text{ज्या} \angle \text{र भू ग्र}} \therefore \text{ज्या} \angle \text{र ग्र भू} = \frac{\text{भू र} \times \text{ज्या} \angle \text{र भू ग्र}}{\text{र ग्र}}$, अस्य मानं परः

यदा $\angle$ र भू ग्र $= 90^\circ$

अत्र भू र मानम् = १

र ग्र मानम् = भौमस्य = १·५२३७

गुरोः = ५·२०८२

शनेः = ९·५३८८

( ३ ) भारतीयानां विभिन्नसिद्धान्तग्रन्थानां मानानि प्रायस्तुल्यानि । एतेन भारतीया परम्परा सुस्पष्टं व्यक्ता भवति ।

( ४ ) प्रतिवृत्तानां मन्दनीचोच्चभङ्गीनां पोषिकाश्च लब्धयः परममन्दफलरूपाः शीघ्रपरिधिरूपाश्चापि भारतीयानां टालम्युपलब्धिभ्यो भिन्नाः । यदि भारतीयैर्ग्रहगणितं टालमीतो यवनानां सकाशाद् वा गृहीतमभविष्यत्तर्हि तेषां तानि मानान्यपि तैः सादरं गृहीतान्यभविष्यन् । अथ भिन्नेष्वप्येतेषु मानेषु चेदेतत् कथ्यते यन्मानानि तु भारतीयैः स्वयं वेधेन समानीतानि परं तेषां क्रिया यवनानां सकाशाद् गृहीता, तदपि न सत् । यतो हि वेधे कुशलो जनः स्वयमेवैतान् सिद्धान्तानाविष्कर्तुं क्षमः ।

९. भारतीयज्यौतिषशास्त्रे मन्दशीघ्रफलानयनविधिस्तयोः फलयोः संस्कारविधिरपि भिन्न इत्येतत्सर्वं ग्रहगणितमीमांसायाः प्रथमाध्यायस्य १४ प्रक्रमे द्वितीयाध्यायस्य २५प्रक्रमे प्रदर्शितम् । मध्यमसूर्यग्रहयोरन्तरेण (मध्यमशीघ्रकेन्द्रेण) साधितस्य शीघ्रफलस्य सकृत् संस्कारापेक्षया भास्करस्यान्येषां चाचार्याणामसकृत् संस्कारः सुसूक्ष्मं फलं प्रदास्यति । यदि सकृत् कर्मणैव शीघ्रफलसंस्कारश्चिकीर्षित आसीत्तदा केन्द्रसाधनार्थं मध्यमरविस्थाने स्पष्टस्य रवेर्ग्रहणं कर्तव्यमासीत् । टालमीमहोदयोऽयनांशगतिं ३६″ प्रतिवर्षं मन्यते, भारतीयानां च ५९″ अतीव सूक्ष्मेति प्रतिपादितमेव ग्रहगणितमीमांसायास्तृतीयाध्यायस्य प्रक्रमे । अथान्यदपि वर्तते । टालमीमहोदयेन चन्द्रस्पष्टीकरणे 'इवेक्शन्'-नामकस्यातिमहत्त्वपूर्णस्य संस्कारस्याविष्कारः कृतः । बुधसाधने च तेन चलं मन्द-

---

$$\therefore \text{ शीघ्रान्त्यफलज्या} = \frac{\text{भू र}}{\text{र ग्र}}$$

$$\text{भौमशीघ्रान्त्यफलज्या} = \frac{१}{१\cdot५२३७} = \cdot६५६३\ldots(३)$$

$$\text{गुरुशीघ्रान्त्यफलज्या} = \frac{१}{५\cdot२०८२} = \cdot१९१६\ldots(४)$$

$$\text{शनिशीघ्रान्त्यफलज्या} = \frac{१}{९\cdot५३८८} = \cdot१०४८\ldots(५)$$

अथ यदि रूप '१' त्रिज्यायां ३६०° परिधिर्लभ्यते तर्हि शीघ्रान्त्यफलज्यया किमित्यनुपातेन ( १ ), ( २ ), ( ३ ), (४), (५) मानानि ३६०° संगुण्य परिधिमानान्युपलब्धानि ।

प्रतिवृत्तकेन्द्रं स्वीकृतम् । सिद्धान्तज्यौतिषे बुधविषयिका कल्पना तु कुत्रचिदपि न दृश्यते । 'इवेक्शन्' संस्कारतुल्योऽपि कश्चित् संस्कारः प्राचीनतमेषु सिद्धान्तज्यौतिषग्रन्थेषु नोपलभ्यते । यदि टालमीमहोदयस्य ग्रन्थादस्माभिः सिद्धान्तज्यौतिषतत्त्वानि गृहीतान्यभविष्यंस्तर्ह्यस्माभिस्तस्य विधीनां सूक्ष्मतत्त्वानामपि ग्रहणं कृतमभविष्यत् ।

१०. टालमीमहोदयात् प्राग् यवनदेशीयस्य कस्यचिद् ग्रन्थस्य चर्चा न श्रूयते । एवमत्र जनानां विश्वासो यत् 'हिपार्कस्'-महोदयेन यावनज्यौतिषशास्त्रस्य मुख्यसिद्धान्तानां विशेषतश्च ग्रह-गणितस्याविष्कारः कृतः । तस्य मतमेवानुसृत्य टालमीमहोदयेन स्वीयस्य ग्रन्थस्य रचना कृता । टालमीमहोदयस्य ग्रन्थस्यास्माकं सिद्धान्तज्यौतिषशास्त्रे प्रभावो नास्तीति ८ म ९ मप्रक्रमाभ्यां सम्यक् प्रतिपादितम् । यद्येतत् कथ्यते यत् टालमीमहोदयात् प्रागेव 'हिपार्कस्'महोदयस्य सिद्धा-न्तानां भारते प्रचारो जातो येनेशवीयसंवत्सरस्य पञ्चमे शतकेऽस्माकं ज्यौतिषशास्त्रं परिपक्वदशायां दृश्यत इति तत्रापि विचारः कर्तव्यः ।

११. तत्र प्रथमं शैली( Style )पदवाच्यायां भारतीयलेखनपद्धत्यां विचारः क्रियते । वेदकालादेव दृश्यते यद् भारतीयैर्नक्षत्राणामन्वर्थकानि नामानि गृहीतानि । मध्वादयो मासा ऋतुपरका यथार्थबोधकाः । ततः परं चान्द्रमासाश्चैत्रादीनां चित्रादियुक्तपूर्णिमापरकार्थबोधकाः सन्ति । एवमेव सिद्धान्तज्यौतिषशास्त्रेऽपि शब्दा दृश्यन्ते । यथा भानुतिग्मरश्मिप्रभृतयः शब्दाः सूर्यस्य तीव्रकिरणबोधकाः । सोमनिशाकरसुधादीधितिप्रभृतयः शब्दाश्चन्द्रस्य दृश्यस्वभावं प्रकट-यन्ति । एवमेवाङ्गारकशनैश्चरादयः शब्दाः । मन्दोच्चशब्देन यवनैर्भूकेन्द्राद् दूरतरः प्रदेशो गृहीतः, भारतीयैस्तु कक्षावृत्तस्य तत् स्थानं गृह्यते यत्र तस्य गतिर्मन्दतमा जायते । यथा तैरुपलब्धं तथैव तस्य शब्दस्यान्वर्थिका संज्ञा । एवमेव यवनैः शीघ्रोच्चस्य 'कंजंक्शन्'संज्ञा कृता, या ग्रहस्य रविणा युतेर्बोधिका । भारतीयैस्तु तत्र ग्रहस्य दृश्या गतिः शीघ्रतमा लब्धेत्यन्वर्थकं नाम धृतम् । नास्याय-यमभिप्रायो यत् यवनानां संज्ञा निरर्थिकाः, परमस्माकमयमाशयो यत् स एवार्थो यवनैर्भारती-यैश्च विभिन्नदृष्टिकोणेनावलोकितो यस्तयोरेकस्यैवार्थस्य स्वतन्त्राविष्कारकत्वं सूचयति । धर्मपरायणै-र्भारतीयैरुच्चस्थान आकर्षकाणां देवविशेषाणां कल्पना कृता । तत्र मध्यमस्पष्टग्रहयोः परस्परं सम्बन्धनप्रदर्शनसमये 'फलानयन'समये च भारतीयानामाकर्षणपद्धतिः सम्यक् प्रदर्शिता । युगा-दितोऽहर्गणानयनपद्धतिस्ततश्चन्द्रादिसाधनमीशवीयशकात् १४०० पूर्वं वेदाङ्गज्यौतिषे दृश्यते ।

१२. येऽत्र पाश्चात्त्या विचारकास्तैः प्रभाविता भारतीयाश्च केचन विचारकाः सन्ति, तैरस्मिन् तथ्ये कदाचिदप्यवधानं न दत्तं यद् भारते ज्यौतिषशास्त्रप्रचारोऽन्यदेशानामिव

विज्ञानरूपेण न जातः । अत्र तु वेदार्थानां प्रकाशनायैवास्य शास्त्रस्याध्ययनं संजातम् । वेदानां षट्स्वङ्गेषु ज्यौतिषं मूर्धनि स्थितम् । भारते ज्यौतिषं ज्ञानमपि वर्तते विज्ञानमपि । ज्ञानपरकत्वेनैतत् स्वीयं शास्त्रीयं रूपं धारयति, विज्ञानपरकत्वेन ग्रहनक्षत्रादीनां यथार्थां स्थितिं बोधयति । ज्ञानस्वरूपत्वादिदं शास्त्रं वेदानुकूलं शास्त्रान्तरानुकूलमर्थं प्रतिपादयति । विज्ञानस्वरूपेण च तेनानीताः पदार्था यथार्थस्थितिबोधका भवन्ति । यथा वेदेषु ग्रहणस्य कारणं तमः सैंहिकेयो वा प्रदिष्टः । शास्त्रेषु ( पुराणेषु ) तत्र राहुविषयिणी कथा दृश्यते । भारतीयैश्च ज्ञानविज्ञानयोः समन्वय एवं कृतः —

राहुः कुभामण्डलगः शशाङ्कं शशाङ्कगश्छादयतीनबिम्बम् ।
तमोमयः शम्भुवरप्रसादात् सर्वागमानामविरुद्धमेतत्[1] ॥ इति ।

एतादृशा भावा ब्रह्मगुप्तलल्लश्रीपतिप्रभृतिभिरपि प्रकाशिताः सन्ति । अथ चैवमेव सूर्यसिद्धान्तादिग्रन्थेष्वयनविषये दोलाभ्रमणसिद्धान्तप्रतिपादनमप्येतदर्थमेव कृतं येनास्य सिद्धान्तस्य चैत्रादिमासानां वैदिकैर्मध्वादिमासैर्विरोधो मा भूयादिति पूर्वमेव प्रतिपादितम् । पाश्चात्यदेशेषु तु ज्यौतिषं केवलं विज्ञानरूपेण तिष्ठति । अत एव ते भारतीयां पद्धतिं वृथाकल्पनाभिर्दूषयन्ति ।

वस्तुतो नैतद् दूषणमेतत्तु भारतीयानां स्वतन्त्राविष्कारस्य सूचकम् । यदि भारतीयैः शास्त्रमिदं यवनानां सकाशाद् गृहीतमभविष्यत्तर्हि तेषां रचनापद्धतिस्तत्र तत्र दृष्टिकोणोऽपि यवनसदृशोऽभविष्यत् ।

१३. वैदिककालादेव वेदाङ्गस्यास्य शास्त्रस्य धारा प्रवाहरूपेणाग्रेसरा दृश्यते । १४०० ईशवीयवर्षेभ्यः प्रागेव वेदाङ्गज्यौतिषे भारतीयैरिमे पदार्थाः सम्यग्ज्ञाता आसन्—

पञ्चवर्षात्मके युगे ( १ ) १८३० सावनदिनानि ।
( २ ) ६२ चान्द्रमासाः ।
( ३ ) ३० क्षयतिथयः ।

अत्र भारतीयैस्तिथ्या आविष्कारोऽपि कृत आसीदिति पी. सी. सेनगुप्तमतम्[2] ।

इतः परं तिथिगणना नक्षत्रगणना सूर्यचन्द्रयोर्गतिगणनापि तत्रोपलभ्यते । ततः परं सूत्रेषु निरुक्ते च ज्यौतिषचर्चा दृश्यते । स्मृतिषु महाभारते च ज्यौतिषशास्त्रस्य सर्वाङ्गीणोन्नति-

---

१. सि० शि० ग्रहणवासनायां गोलाध्याये १० तमः श्लोकः ।

२. बर्जेस्कृतटीकाया भूमिकायां ३३-३४ पृष्ठयोः ।

दृश्यत इत्यस्य निबन्धस्य ६ प्रक्रमोक्तदिशा ज्ञायते, तत्र ग्रहचारस्य ग्रहयुतेर्ग्रहनक्षत्रयुतेर्वक्रगतेश्च दर्शनात्। परमीशवीयशतकस्यारम्भात् चतुर्थशतकं यावज्ज्यौतिषशास्त्रपरकः कश्चिद् ग्रन्थो न दृश्यते, येन धारेयं विच्छिन्नेव प्रतीयते। अस्य किं कारणमिति सामान्यतो विचारे क्रियमाणे कश्चिदपि हेतुर्नोपलभ्यते।

१४. पाश्चात्त्या विचारका भारतीयां परिस्थितिं सम्यगवबोद्धुमसमर्थाः, यतस्ते ज्यौतिष-शास्त्रमन्यशास्त्रनिरपेक्षया दृशा पश्यन्ति। भारतीयाभिः सामयिकीभिः स्थितिभिरपरिचिता एव ते। भारते महाभारतासन्नकाल एकस्या नूतनाया विचारधाराया अभ्युदयो जातः। सा कालान्तरे पुराणसाहित्यरूपेणोपलभ्यते। इमानि पुराणानि कालान्तरे गते वैदिकधर्माङ्गतां प्रापुः। तेषां च प्रभावो वैदिकप्रभावादप्यधिको जातः। अर्वाचीनं सर्वमपि संस्कृतसाहित्यं पुराण-साहित्येन प्रभावितमित्यत्र न कस्यचिदपि सन्देहः। सा च विचारधारा ईशवीयशतकस्य पञ्चमे शतके महतीं पुष्टिं गता। धार्मिकदृष्ट्याऽपि पुराणानां पुराणदेवतानां च वेदेभ्यो वेददेवताभ्योऽधिकं महत्त्वं जातम्। एतादृश्यां परिस्थितौ ज्यौतिषशास्त्रस्य पुराणसाहित्येन समन्वयोऽवश्यं कर्तव्योऽ-भूत्। वेदे च युगं पञ्चवर्षीयमासीत्, यदनुसारं वेदाङ्गज्यौतिषे गणितं लभ्यते। पुराणेषु युगादीनामन्यैव व्यवस्था। तस्या व्यवस्थाया ज्यौतिषशास्त्रे सम्पादनमावश्यकमभवत्। अत एव तदानीन्तनैर्गणकमूर्धन्यैर्नूतनया व्यवस्थया शास्त्राणां रचना कृता। तत्रत्या युगव्यवस्थैव नूतनपरिवर्तनस्य हेतुरासीदिति सूर्यसिद्धान्तस्य—

> शास्त्रमेतत्तदेवाद्यं यत्पूर्वं प्राह भास्करः।
> युगानां परिवर्तेन कालभेदोऽत्र केवलः॥[1]

इति श्लोकस्य फलितार्थः। अत्र युगानां भेदेन कालभेद एवास्य शास्त्रस्य प्राचीन-शास्त्राद् भेदकारकः, मूलाः सिद्धान्तास्तु प्राचीना एवेति सूर्यसिद्धान्ताभिप्रेत आशयः। अथ नूतनक्रमनिर्धारणाय तैः स्वकाले वेधानि सम्पाद्य तदानीन्तने काले वर्तमानानां ज्यौतिषसिद्धा-न्तानां नवीनरूपेणोपस्थापनं कृतम्। अत एव निरयणा ग्रहास्तेषां काले वर्तमाने मेषादौ समायान्ति। एतेन नैतच्छङ्क्यं यत्तैर्नूतना सिद्धान्ताः यवनप्रेरणया लिखिता यतस्तैरपि तेषां शास्त्राणां प्राचीनता स्वीकृता। वराहमिहिरेणापि पञ्चसिद्धान्तिकायां प्राचीनानां सिद्धान्त-

---

१. सू० सि० म० अ० ६ मः श्लोकः।

ग्रन्थानां चर्चा कृता । ब्रह्मगुप्तेनापि महता कालेन खिलीभूतस्य ब्रह्मसिद्धान्तस्यैव जीर्णोद्धारः कृतः । सूर्यसिद्धान्ते गोलस्य सम्यग्वर्णनं कृत्वापि सूर्यांशपुरुषेण प्रतिपादितम्—

"तस्माद् गुरूपदेशेन रचयेद् गोलमुत्तमम्"[1] इति ।

यदि ग्रहगणितबोधको गोलः सर्वथा यवनाश्रितो नवीन एवासीत्तर्हि सूर्यांशपुरुषेण गुरुपरम्परायाश्चर्चा कुतः कृता ? अनेन ध्वन्यते यत्तदानीन्तने काले ज्यौतिषाध्ययनाध्यापनार्थं गुरुपरम्परासीत् ।

अथ च काले गते नूतनसिद्धान्तैः सर्वक्रियाघटकत्वात् प्राचीनपरम्परायाः प्रयोगाभावाल्लोपो जातः । यानि च शास्त्राण्यासन् तेषु बहूनि खिलत्वं गतानि । कानिचिच्च ब्रह्मगुप्तसदृशैरुद्धृतानि । शास्त्रमिदं प्रायशो गुरुमुखादेवाधीयते स्म । शास्त्रमिदं परमरहस्यत्वेनोद्घोषितं प्रायः सर्वेषूपलब्धसिद्धान्तेषु[2] । अतः सम्भवमिदं यद् रहस्यरूपेण संरक्षिताया विद्यायाः कालान्तरेऽव्यवहार्यत्वाद् लोपो जातः । अतो भारतीयज्यौतिषशास्त्रस्य धारा ईशवीयशतकस्य १०० वत्सरात् ४०० वत्सरं यावत् खण्डिता प्रतिभाति सा न तथा । अनेन प्रकारेण विचारेण भारतीयानां निरयणवर्षविषयक आरोपोऽपि वृथा सिध्यति ।

१५. क्रान्तिवृत्तस्य २७ भागास्तु नक्षत्ररूपेण दृश्यन्ते वैदिके साहित्ये, परं तत्र मेषवृषादिरूपेण द्वादशभागा न दृश्यन्ते । तथापि सौरमासानां १२ संख्या तत्रोपलभ्यते—

वेदमासो धृतव्रतो द्वादश प्रजावतः ।
वेदा य उपजायते ॥

(ऋ० सं० १।२५।८)

द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य ।
आ पुत्रा अग्ने मिथुनासो अत्र सप्तशतानि विंशतिश्च तस्थुः ॥

(ऋ० सं० १।१६४।११)

---

१. सू० सि० ज्यौतिषोपनिषदध्यायः ।

२. अत्र सूर्यसिद्धान्तस्य मध्यमाधिकारे—
"रहस्यं परमं गुह्यं जिज्ञासुर्ज्ञानमुत्तमम्" इति ।
दिव्यं ज्ञानमतीन्द्रियं यदृषिभिर्ब्राह्मं वशिष्ठादिभिः
पारम्पर्यवशाद् रहस्यमवनीं नीतं प्रकाश्यं ततः ।
इत्यादि सिद्धान्तशिरोमणौ गोलाध्यायस्य छेद्यकाधिकारे ।

अस्मिन् मन्त्रे मासानां संख्या १२, वर्षे दिनरात्रिसंख्या (मिथुनासो) च ७२० प्रतिपादिता। एतेन वर्षे दिनसंख्या ३६० मिता समायाति।

यद्यपि कालान्तरे चान्द्रमासानां प्रचारो जातः, तथापि वर्षमानं सौरमेवातिष्ठत्। अत एव कदाचिदेकस्मिन् सौरवर्षेऽधिमाससहितास्त्रयोदशमासा उपलभ्यन्ते। "द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः।" इति वेदाङ्गज्यौतिषेऽपि कालविभागस्यैवं कल्पना कृता—

६० पलानि = १ घटी

६० घट्यः = १ दिनम्

३० दिनानि = १ मासः

१२ मासाः = १ वर्षः

एवं प्रतीयते यद् द्वादश मासाः सूर्यस्य क्रान्तिवृत्तपरिक्रमाबोधकाः। अतो यदि क्रान्तिवृत्तस्य १२ भागाः क्रियन्ते तर्हि १२ राशयो लभ्यन्ते। तासां मेषादिसंज्ञा यद्यपि वैदिकसाहित्ये महाभारते च नोपलभ्यन्ते, तथापि नैतस्य सुस्पष्टं प्रमाणं विद्यते यत्तैरिमा अन्येषां सकाशाद् गृहीताः। यतो हि मेषादिसंज्ञा यवनैः स्वयं नाविष्कृताः, परं खल्डियनजनानां सकाशाद् गृहीताः, तैश्चापि प्राच्यप्रदेशेभ्यो विशेषतो भारताद् गृहीता भविष्यन्तीति वर्जेसमहोदयमतम्।

अथ ७ वाराणां विषय उच्यते। तत्र यवनैः ७ वाराणां कल्पना कृतेति निराधारम्। वाराणां नामानि देवानां (ग्रहाणां) नामानि। तानि च यवनैर्मिश्रदेशीयानां सकाशाद् गृहीतानि। यथोक्तं हिरोडोटस्महोदयेन—"देवानां नामानि यवनदेशे मिश्रदेशात् समागतानि[1]" इति मिश्रदेशीयैरिमानि नामानि प्राच्यदेशीयानां खाल्डियनजनानां सकाशाद् गृहीतानि, तैश्चैनानि भारतीयानां सकाशाद् गृहीतानि सन्तीति बर्जेस्मतम्।

वेदेषु वाराणां वाचको वासरशब्दो दृश्यते यथा—

आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम्।
परो यदिध्यते दिवा ॥ (ऋ० सं० ८।६।३०)

अथ चाथर्वज्यौतिषे—

आदित्यः सोमो भौमश्च तथा बुधबृहस्पती।
भार्गवः शनैश्चरश्चैव एते सप्त दिनाधिपाः ॥ ९३ ॥

---

1 Names of the gods came into Greece from Egypt.

इत्यनेन स्पष्टं प्रतीयते यद् वाराणां सप्तसंख्या तेषां नामानि च भारतेऽतिप्राचीनकालत एव प्रचलितान्यासन्निति वर्जेसमतं सप्रमाणं वर्तते ।

१६. यत्तु 'केन्द्र'–'लिप्त'–आदिशब्ददर्शनाद् यवनप्रभावाक्रान्तं ज्यौतिषशास्त्रं कथ्यते तन्न सत् । संस्कृतस्य यवनभाषायाश्च व्याकरणे सदृशे एव वर्तेते, तत्र बहूनां च शब्दानां साम्यं वर्तते। यथा वेदे शुक्रवाचकः 'वेन' शब्दो दृश्यते—"·······'इमां हैके शुक्रस्य पुरोरुचं कुर्वन्ति । अयं वेनश्चोदयात् पृश्निगर्भा ज्योतिर्जरायू रजसो विमान इति । तदेतस्य रूपं कुर्मो य एष तपतीति यदाह ज्योतिर्जरायूरिति" (श० ब्रा० ४।२।१) इति ।

अथ लैटिनभाषायां शुक्रशब्दार्थं 'वेनस'शब्दो दृश्यते । अथ यवनभाषायां शुक्रवाचकः 'कुप्रस'शब्दोऽपि शुक्रस्यैवापभ्रंशः प्रतीयते । बहूनां च पाश्चात्त्यविदुषां मतमिदं यत् कदाचित्काले भारतीया आर्या वर्तमानयूरोपनिवासिनश्चैकत्रैव स्थाने वसन्ति स्म । अतो द्वित्राणामेकार्थवाचकानां शब्दानां विलोकनेन नायं प्रतिफलति यद् भारतीयैर्ज्यौतिषं यवनानां सकाशाद् गृहीतमिति ।

१७. इदं पूर्वमेव प्रतिपादितं यदाधुनिकं सिद्धान्तज्यौतिषशास्त्रं पुराणमतेन प्रभावितं वर्तते । अतो ज्यौतिषशास्त्रेऽपि पौराणिकी वर्णनशैली दृश्यते । पुराणेषु देवासुराणां तपश्चर्याया बहूनि वर्णनानि दृश्यन्ते । तत्राल्पतत्त्वज्ञानोपदेशोऽप्यृषिसंवादरूपेण दृश्यते । एवमेव सूर्यसिद्धान्तेऽपि प्रारम्भे वर्णनं दृश्यते । अयं मयासुरस्तालमयसनाम्ना टालमीति चेत् कथ्यते, तर्हि सूर्यसिद्धान्ते टालमीग्रन्थस्यापि प्रभावेण भवितव्यम्, परं तन्न दृश्यते । अथ च पुराणेषु मन्दोदर्याः पिता रावणस्य श्वसुरो मयासुर आसीदिति प्रसिद्धम् । तस्य च विज्ञानपाण्डित्यं प्रसिद्धम् । अत एव सूर्यसिद्धान्तकर्त्रापि तस्यैव कथोपनिबद्धा । 'रोमके नगरे' इति पाठः सर्वेषु सूर्यसिद्धान्तेषु नोपलभ्यते । यदि स्यादपि तर्हि न काचित् क्षतिः, यतो हि ज्यौतिषग्रन्थेषु यस्य रोमकदेशस्य चर्चा विद्यते, तादृशः कश्चिदपि देशो नोपलभ्यते । स तु लङ्कायाः सकाशान्नवत्यंशान्तरे निरक्षदेश आसीत् । परं तादृशः कश्चिदपि देशो नोपलब्धः । ज्यौतिषशास्त्रे यद् भूगोलवर्णनं दृश्यते, यत्र च लङ्का रोमकं सिद्धपुरं कोटीति चत्वारि नगराणि निरक्षे नवत्यन्तरेण वर्णितानि, तत्सर्वं पुराणानुरूपमेवासीत् । यद्यपि ज्यौतिषशास्त्रे पुराणप्रभावात् तेषां वर्णनं दृश्यते, तथापि गणकानां तन्मतं सम्मतं नासीत् । भास्कराचार्येण सिद्धान्तशिरोमणौ भूगोलवर्णनं कृत्वा लिखितम्—

"यदिदमुक्तं तत्सर्वं पुराणाश्रितम्[1]" इति ।

अथ च म्लेच्छास्तु यवनास्तेष्वित्यादिना यद् यवनप्रशंसा कृता, सापि फलितज्यौतिषपरका । फलितमस्य निबन्धस्य विषयो नास्तीति तत्र विचारो न क्रियते ।

१८. अथैवं सर्वप्रकारेण विचारे क्रियमाण इदमेव प्रतिफलति यद् भारतीयैः स्वतन्त्ररीत्या ग्रहगणितस्याविष्कारः कृतः । चन्द्रगुप्तप्रथमस्य शासनकाले यवनानां भारते प्रवेशात्तदनन्तरमेव च हिपार्कसद्वाराऽविकलस्य ग्रहगणितस्य यवनदेशे प्रचारणाद् यवनैरेव भारतीयानां ग्रहगणितं गृहीतम् । तत्र स्वतन्त्राध्यवसायद्वारा नूतनाः परिष्कारा अपि कृता इत्यपि संभाव्यते ॥



---

१. सि० शि० गो० भ्र० पृ० १८१

# अभिज्ञानशाकुन्तलसमीक्षा

श्रीमहादेव उपाध्यायः, वा० सं० वि० वि० साहित्याध्यापकः ।

सर्वस्य प्रभवं कालं कालीं तच्छक्तिमद्भुताम् ।
कालीदासं च नत्वाऽहं किञ्चिद्वदितुमारभे ॥
प्रस्तरोऽप्यधिगतः सजीवतां यस्य पादरजसाऽपि संस्कृतः ।
बोधसिन्धुवरतीर्थमाश्रये नित्यमुक्तरघुनाथमद्वयम् ॥
कालिदासगिरां सारं कालिदासः सरस्वती ।
चतुर्मुखोऽथवा ब्रह्मा विदुर्नान्ये तु मादृशाः ॥
तथापि सर्वसंसारकारणीभूतविग्रहा ।
याऽविद्या तत्प्रभावेण ममारम्भोऽयमीदृशः ॥
अतः कवीनां पूर्वेषां वदनाब्जात् परिच्युताम् ।
पदालिं श्रुतिसंह्लादिसुखोद्गीतामिमां श्रये ॥
काव्येषु नाटकं श्रेष्ठं तत्रापि च शकुन्तला ।
तत्रापि च चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम् ॥

अथेदं विमृश्यते—यद्यपि सकलेऽपि वाङ्मये सद्यः परनिर्वृतिजननेन तत्पूर्वतया कान्तासम्मितत्वेन हिताहितकर्तव्याकर्तव्योपदेशजननेन च काव्यस्य श्रैष्ठ्यमतिरोहितम्, तथापि काव्यनाट्ययोरपि नाटकस्य श्रैष्ठ्यं किम्मूलकमिति विविच्यते ।

तथाहि—श्रव्यकाव्ये शब्दत उपस्थापिता विभावानुभावादयो न तथा रत्यादीन् स्थायिभावान् रसरूपतया परिणमय्य साक्षात्कारयन्ति, यथा आपरोक्ष्येणाभिनयगोचरीकृताः । नह्यभिनये यादृशाः सुसूक्ष्मा अपि विभावादीनां विशेषाश्चक्षुषा समुपलभ्यन्ते तथा, ये विभावादिगता विशेषाः परिमितार्थप्रमितशक्तिकैः शब्दैरनुभावयितुं शक्याः । अभिनये हि शिक्षानैपुण्येन सामाजिकानामध्यक्षमभिनीता विभावादयः साधारण्येन प्रतीयन्ते । तदुक्तं दर्पणे—

परस्य न परस्येति ममेति न ममेति च ।
तदास्वादे विभावादेः परिच्छेदो न जायते ॥ इति ।

न चैवं श्रव्यकाव्येषु। तेषु हि विभावादीनां परकीयत्वग्रहस्य सुदृढभेदग्रहपूर्वकस्य सत्त्वेन शब्दतः कथञ्चिदाहार्यो विभावादीनां साधारण्यग्रह इति रीत्या शब्दार्थानुसन्धानव्यवधानेन कथञ्चित् क्लेशमुखेन रसास्वाद इति। नाटकेष्वपि शकुन्तलाभिधानं नाटकमतिशयितैर्नाटकगुणैरतिशेतेऽन्यानि रूपकाणि। तदिदं साधयितुं कानिचिद् महाकवीनां रूपकाणि पुरस्कृत्य साम्प्रतमालोच्यते शाकुन्तलनाम नाटकरत्नम्।

## नान्दीपूर्वरङ्गयोः प्रस्तावनायाश्च विमर्शः

तत्र तावत् शाकुन्तलस्य नान्द्येव सर्वथा लक्षणतः परीक्ष्यते। तत्र नान्दी पूर्वरङ्गमिति चास्ति वस्तुतः प्रयोगद्वयम्। किन्तु क्वचिन्नान्दी पूर्वरङ्गात् प्रागेव ग्रन्थाद्बहिः क्रियते नान्दीनाम्ना सूत्रधारेण, नान्द्यन्ते च स्थापकस्य सूत्रधारस्य प्रवेशो भवति। पूर्वरङ्गस्तु सूत्रधारेण नटैः सह प्रयुज्यते, तच्च नाटकस्य प्रवृत्तये क्रियते। तदुक्तं कविभिः—"पूर्वरङ्गः प्रसङ्गाय नाटकीयस्य वस्तुनः"। नान्दीलक्षणं तु—

आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता॥
माङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी।
पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत॥

(साहित्यदर्पणे, ६।२४-२५)

पूर्वरङ्गलक्षणं तु—

यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते॥

(सा० द० ६।२२)

तत्र नान्दीपदार्थः—नन्दनं नन्दः, भावे घञ्, तस्येयं कारणीभूता सङ्गीतिर्नान्दी। तस्येदमिति कार्यकारणभावरूपे सम्बन्धेऽण्। तदुक्तं नाट्यप्रदीपे—

नन्दन्ति काव्यानि कवीन्द्रवर्गाः
कुशीलवाः पारिषदाश्च सन्तः।
यस्मादलं सज्जनसिन्धुहंसी
तस्मादियं सा कथितेह नान्दी॥

नाट्यसूत्रे प्रथमाध्याये भरतोऽपि—

पूर्वं कृता मया नान्दी आशीर्वचनसंयुता ।
अष्टाङ्गपदसंयुक्ता प्रशस्ता वेदसम्मता ।

पञ्चमाध्याये च—

सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः ।
नान्दीं पदैर्द्वादशभिरष्टाभिर्वाप्यलङ्कृताम् ॥

पूर्वरङ्गपदार्थस्तु—रज्यन्तेऽनेन पारिषदा इति रङ्गो नाट्यम् । बाहुलकात् करणे घञ् । ततः पूर्वं परिषदावर्जनाय क्रियमाणं सङ्गीतकर्म पूर्वरङ्गः । तदुक्तम्—"यन्नाट्यवस्तुनः पूर्वम्" इत्यादि । भावप्रकाशिकायां तु—

सभापतिः सभासभ्या गायका वादका अपि ।
नटी नटश्च मोदन्ते यत्रान्योऽन्यानुरञ्जनात् ॥
अतो रङ्ग इति ज्ञेयः पूर्वंवत् स प्रकल्पते ।
तस्मादयं पूर्वरङ्ग इति विद्वद्भिरुच्यते ॥ इति ।

तत्र ग्रन्थाद्बहिर्नान्दी यथा स्वप्नवासवदत्तायां "नान्द्यन्ते ततः प्रविशति सूत्रधारः" इति ग्रन्थाद्बहिर्नान्दीनाम्ना सूत्रधारेण कृतां नान्दीं पदत उपन्यस्य—"उदयनवेन्दुसवर्णावासवदत्तावलौ बलस्य त्वाम् । पद्मावतीर्णपूर्णौ वसन्तकम्रौ भुजौ पाताम् ॥" इति सूत्रधारप्रयुक्तपूर्वरङ्ग उपन्यस्तः । क्वचित्तु ग्रन्थ एव नान्दीनाम्ना सूत्रधारेण कृता नान्दी प्रयुज्यते, पूर्वरङ्गस्तु स्थापकसूत्रधारेणेति । तद्यथा—प्रसन्नराघवेऽनर्घराघवे उत्तररामचरिते मृच्छकटिके च । सूत्रधारः पठेन्नान्दीमिति भरतोक्तिदिशा नान्द्या नान्दीनामसूत्रधारप्रयोज्यता गम्यते । एवमेव यन्नाट्यवस्तुनः पूर्वमित्यादिना पूर्वरङ्गस्य कुशीलवप्रकर्तव्यताऽवगम्यते । यद्यपि पूर्वरङ्गं विधायैव सूत्रधारे विनिर्गते इत्यनेनास्य विरोधस्तथापि विधायेत्यस्यादौ नटैः सहेति शेषपूरणेन स परिहर्तव्यः । एतस्य चोदाहरणमुपलभ्यमानेषु नाटकेषु नोपलभ्यते । विश्वनाथस्तु मृच्छकटिकशाकुन्तलादिषु नान्दीत्वेन व्यवह्रियमाणं यत् पद्यमुपलभ्यते न तन्नान्दी, किन्तु पूर्वरङ्गस्य रङ्गद्वाराभिधानमङ्गं तत्, नान्दी तु ग्रन्थाद्बहिरेव कृता । 'नान्द्यन्ते सूत्रधारः' इति वाक्यस्य तु नान्द्यन्ते सूत्रधार इदं रङ्गद्वाराभिधानं पूर्वरङ्गस्याङ्गं प्रयुक्तवानित्यर्थमभिप्रैति । तदुक्तं साहित्यदर्पणे षष्ठपरिच्छेदे—एतन्नान्दीति कस्यचिन्मतानुसारेणोक्तम् ।

वस्तुतस्तु पूर्वरङ्गस्य रङ्गद्वाराभिधानमङ्गमित्यन्ये। यदुक्तम्—

यस्मादभिनयो ह्यत्र प्राथम्यादवतार्यते।
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम्॥ इति।

उक्तप्रकारायाश्च नान्द्या रङ्गद्वारात् प्रथमं नटैरेव कर्तव्यतया न महर्षिणा निर्देशः कृत इति।

वस्तुतस्तु रङ्गद्वारं नान्दी चैकमेव। तच्च पूर्वरङ्गाङ्गं नान्दीनामकसूत्रधारप्रयोज्यम्। अत एव पञ्चमाध्याये मुनिनोक्तम्—"सूत्रधारः पठेन्नान्दीम्" इत्यादि। अथ भवतु रङ्गद्वारं वा नान्दी तदतिरिक्ता वा ग्रन्थे कृता तु परीक्ष्यते। तत्र नान्दीलक्षणम्—

पूर्वं कृता मया नान्दी आशीर्वचनसंयुता।
अष्टाङ्गपदसंयुक्ता प्रशस्ता वेदसम्मता॥ इति भरतः।

पञ्चमाध्याये—"सूत्रधारः पठेन्नान्दीम्" इति पद्यस्य व्याख्यावसरेऽभिनवभारत्याम्—"अनेन अस्रतालानुगता त्रिपदा षट्पदा द्वादशपदेति। चतुरस्रतालानुगता चतुष्पदाऽष्टपदा षोडशपदा" इति नान्द्यास्त्रिविधत्वं तालभेदेनोक्तम्। साहित्यदर्पणे त्वाशीर्वचनसंयुक्तेत्यादि-द्वादशपदाऽष्टपदा चेति द्वैविध्यमुक्तम्। किञ्च काव्येन्दुप्रकाशे—

नीली शुद्धेतिभेदेन सा नान्दी द्विविधा भवेत्।
उपादानं वर्णनं वा भवेद्यत्रेन्दुसूर्ययोः॥
सा नीली स्यात् तदन्या तु शुद्धेति परिगीयते।

इति प्रकारान्तरेण नान्द्या द्वैविध्यमुक्तम्। अत्रोपादानं स्वरूपत उपन्यासः, वर्णनं तु तत्तद् विशेषणवत्तयेति विशेषः। तत्र अष्टपदा द्वादशपदा नान्दी भवतीत्यादिप्रभेदेषु। पदशब्देनावान्तरवाक्यैकस्वरूपं पदं मन्तव्यम्। तदुक्तं नाट्यप्रदीपे—

श्लोकपादं पदं केचित् सुप्तिङन्तमथापरे।
परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे॥

तथा च पञ्चमाध्याये महर्षिणा—

नमोऽस्तु सर्वदेवेभ्यो द्विजातिभ्यस्ततो नमः।
जितं सोमेन वै राज्ञा शिवं गोब्राह्मणाय च॥

ब्रह्मोत्तरं तथैवास्तु हता ब्रह्मद्विषस्तथा ।
प्रशास्त्विमां महाराजः पृथिवीं च ससागराम् ॥
राष्ट्रं प्रवर्धतां चैव रङ्गस्याशा समृध्यतु ।
प्रेक्षाकर्तुर्महान् धर्मो भवतु ब्रह्मभाषितः ॥
काव्यकर्तुर्यशश्चापि धर्मश्चापि प्रवर्धताम् ।
इज्यया चानया नित्यं प्रीयन्तां देवता इति ॥

इत्यवान्तरवाक्यरूपा द्वादशपदा नान्दी प्रदर्शिता ।

## रूपकान्तरे नान्दीस्वरूपम्

केचित्तु श्लोकचतुर्थांशः पदमिति मत्वाऽष्टपदा नान्दीति वदन्ति । तन्मतेनानर्घराघवनान्दीश्लोकद्वयरूपाऽष्टपदा । सा च सूर्याचन्द्रमसोरुपादानेन नीली । अस्यां नाट्यबीजं वस्तुव्यङ्ग्यत्वेनापि नोपन्यस्तम् । एवं प्रसन्नराघवे श्लोकचतुर्थांशमेव पदमादाय त्रिभिः पद्यैर्द्वादशपदा नान्दी समुपन्यस्ता । इयं च शुद्धा, न तु नीली । पुष्पवतोरन्यतरस्योभयस्य वारोप्यत्वेनोपन्यासेऽपि वर्ण्यत्वेनानुपन्यासात् । उत्तररामचरिते तु सुप्तिङन्तलक्षणपदमाश्रित्य द्वादशपदा शुद्धा नान्दी समुपन्यस्ता । अत्रापि च नाट्यबीजं नोपक्षिप्तम् । मृच्छकटिकेऽपि श्लोकचतुर्थांशरूपं पदमादायाष्टपदा शुद्धा नान्दी अनुपक्षिप्तनाट्यबीजा प्रदर्शिता ।

## शाकुन्तलनान्द्या वैशिष्ट्यम्

शाकुन्तले तु मुनिसम्मतमवान्तरवाक्यैकस्वरूपं पदमादायाष्टपदा नान्दी प्रदर्शिता । एषा च नान्दी नीली, "ये द्वे कालं विधत्तः" इति पुष्पवतोर्द्वयोरपि स्वप्राधान्येनोपादानात् । किञ्चास्यां नाट्यबीजमुपन्यस्तमिति पत्रावली नाम्न्येषा विशिष्टा नान्दी । तदुक्तं नाट्यदर्पणे—

यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः ।
श्लेषेण वा समासोक्त्या नान्दी पत्रावली तु सा ॥

अत्र हि "या सृष्टिः स्रष्टुराद्या" इति शाकुन्तलनान्दीपद्येऽर्थश्लेषवशात् शकुन्तलादिरूपः प्रकृतनाट्यसम्बद्धोऽर्थो व्यज्यते, प्रकृतश्लोकवाक्यार्थानन्वयित्वेनाप्रकृतत्वात् । तथाहि—"या सृष्टिः स्रष्टुराद्या" इति वाक्येन शकुन्तला सूच्यते । कालिदासस्य ह्ययमेव वर्णनाप्रकारो लोकोत्तरसुन्दरीवर्णने । यथा मेघदूते—"या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः" इति ।

'वहति विधिहुतं या हविः' इत्यनेनापि शकुन्तलैव सूचिता। तथाहि छान्दोग्यो-पनिषदि पञ्चाग्निविद्यायां स्त्रियां रेतःसेकरूपा पञ्चम्याहुतिरभिहिता। या च होत्रीत्यनेन दुष्यन्तः सूचितः। 'ये द्वे कालं विधत्तः' इति प्रियंवदानुसूये सङ्केतकालविधात्र्यौ सख्यौ सूचिते। 'श्रुति-विषयगुणा या स्थिता व्याप्य विश्वम्' इत्यनेन विश्वविख्यातो महर्षिः कण्वः सूचितः। अत्र श्रुतिपदेन वेदः कर्णौ वा। 'यामाहुः सर्वबीजप्रकृतिः' इत्यनेन तत्रभवान् मारीचः प्रजापतिपतिः कश्यपो निर्दिष्टः। स हि सर्वेषां प्राणिबीजानां प्रजापतीनां साक्षात् परम्परया वा प्रकृतिरिति। 'यया प्राणिनः प्राणवन्तः' इत्यनेनेन्द्रो निर्दिष्टः। इन्द्रो हि मेघानामधिष्ठाता सम्यक् प्रवर्षणेन प्राणिनः प्राणयति, "अन्नमयं सोम्य मनः, तेजोमयी वाक्, आपोमयः प्राणः" इति श्रुतेः। यद्यप्येतेषु नाट्यवस्तुष्वष्टत्वसंख्या नोपपद्यते, तथाप्यस्मिन् पक्षेऽष्टाभिरिति न संख्यापरम्, किन्तु लोके व्याप्ताभिरित्यर्थकम्, 'अशू व्याप्तौ' इति धातोर्निष्ठाप्रत्ययेन सिद्धत्वादिति।

तदेवं नाट्यबीजार्थगर्भत्वेन पत्रावलीरूपतया, मुनिमतद्वादशपदत्वानुसरणेन, नीलीरूप-तया, रङ्गद्वारेति नामार्थानुगमेन च शाकुन्तलनान्द्याः सर्वरूपकनान्द्यपेक्षयाऽभ्यर्हितत्वम्। किञ्चात्र "पञ्चत्रिंशत्पदा नान्दी नित्यमेव शुभावहा। स्यान्नायकस्य च कवेर्यदि शम्भुविभूषिता॥" इति भरतोक्त्या पञ्चत्रिंशत्पदायाः शम्भुविभूषितायाः शाकुन्तलनान्द्या अपरमपि प्राशस्त्यम्। पदं चात्र सुप्तिङन्तलक्षणमिति।

अत्र च शाकुन्तलनान्द्यां यद्यपि नाट्यबीजमुपक्षिप्तं व्यङ्ग्यत्वेन, तथापि नामुखस्य—

तवास्मि गीतरागेण हारिणा प्रसभं हृतः।
एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा॥

इत्यस्य सपरिकरस्य वैयर्थ्यम्, प्रत्यक्षं वस्तूपक्षेपकत्वात्। नापि चात्र पूर्वरङ्गेणैव नाट्य-विघ्नोपशमसम्भवे रङ्गद्वाररूपाया नान्द्या वैयर्थ्यम्, पत्रावलीरूपाया नान्द्या निगूढं वस्तूपक्षे-पिकाया अवश्यकर्तव्यत्वेन लक्षणग्रन्थेषूपदेशात्। तदुक्तम्—

प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि।
तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये॥

निगूढमुपक्षिप्तं हि बीजं कामिनीकुचकलशवद् यथा चमत्करोति न तथा प्रत्यक्षमिति।

तथा चायं क्रमः—पूर्वं रङ्गद्वाररूपा नान्दी। सा च नान्दीनामसूत्रधारप्रयोज्या। तत आमुखरूपा प्रस्तावना स्थापकसूत्रधारप्रयोज्या। यस्या गर्भे पूर्वरङ्गो नटैः सह स्थापकेन सूत्र-

धारेण प्रयुज्यते, पूर्वरङ्गान्ते च सूत्रधारप्रयोज्यः प्रत्यक्षवस्तूपक्षेपकः प्रस्तावनाया अपरोंऽशः। यद्यपि पूर्वरङ्गं विधायैव सूत्रधारो निवर्तत इति वाक्यात् पूर्वरङ्गस्यापि नान्दीनामकसूत्रधार-कर्तव्यतैवापाततः प्रतीयते, तथापि नटैः सह पूर्वरङ्गं विधत्त इत्येष एव सिद्धान्तः। पूर्वरङ्गं विधायैव सूत्रधारे विनिर्गत इति वाक्यस्य त्वयमर्थः—नान्दीनाम्नि सूत्रधारे नान्दीं विधाय विनिर्गते सति स्थापकः सूत्रधारः प्रविश्य नटैः सह पूर्वरङ्गं विधायैव काव्यमास्थापयेदिति, नाट्यस्यापि काव्य-त्वात्। अस्मिंश्च व्याख्याने सर्वेषामपि कवीनामविभागेन स्वनाटकेषु प्रस्तावनामध्ये स्थापकसूत्र-धारेण सह नटैः क्रियमाणस्य संगीतरूपस्य पूर्वरङ्गस्योपन्यासरूपः समाचार एव मानमिति।

नान्द्यन्ते सूत्रधारः—'अलमतिविस्तरेण' इति शाकुन्तलप्रयुक्तस्य च वाक्यस्याय-मर्थः—नान्दीनामकसूत्रधारप्रयुक्तनान्द्यन्ते स्थापकनामा सूत्रधारो नान्दीनामकं सूत्रधारं रङ्गान्नि-वर्तनायादिशन्नेपथ्य एव ब्रवीति नान्द्या अतिविस्तरेणालमिति, नान्द्या मुख्यफलस्य नाट्य-बीजोपक्षेपस्यैकश्लोकरूपयैव नान्द्या स्वल्पया कृतत्वात्। रङ्गविघ्नोपशमरूपं तु फलं मङ्गल-रूपया नान्द्या, आशीर्वचनसंयुक्तया माङ्गल्यपदार्थनिर्देशरूपया च कृतमवशिष्टं च पूर्वरङ्गेणानन्य-फलेन सम्पादयिष्यत इति। तत्र न केवलशाकुन्तलप्रस्तावनायाः पूर्वरङ्गस्य च लक्षणानतिलङ्घन-रूपमेव वैशिष्ट्यम्, अपि तु नाट्यबीजोपक्षेपकत्वरूपमपि प्रत्यक्षतो व्यङ्ग्यत्वेन च। तथा हि—पूर्वरङ्गलक्षणं तावत् पूर्वमुक्तमेव। प्रस्तावना तु—

नटी विदूषको वापि पारिपार्श्विक एव वा।<br>
सूत्रधारेण सहिताः संलापं यत्र कुर्वते॥<br>
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।<br>
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा॥ इति।

## शाकुन्तलपूर्वरङ्गवैशिष्ट्यम्

यथा चात्र शाकुन्तलपूर्वरङ्गे नाट्यबीजोपक्षेपकत्वं तथा प्रदर्श्यते। तथाहि पूर्वरङ्गेऽत्र द्वे पद्ये गानकर्मतयोपन्यस्यता कविना ततः प्राक् "ननु इममेव तावदचिरप्रवृत्तमुपभोगक्षमं ग्रीष्मसमयमधिकृत्य गीयताम्" इति नटीं प्रति सूत्रधारस्यादेशोऽपि वर्णितः। अत्र ह्युपभोग-क्षममिति ग्रीष्मसमयविशेषणोपन्यासेन शकुन्तलादुष्यन्तयोरुपभोगोऽभिसंहितः। ग्रीष्मस्योप-भोगक्षमत्वञ्च दिवापि निद्रापरिष्वङ्गसम्भवाद् व्यापारान्तरपरिहाराच्च। वसन्तस्य तु शोभनत्वेऽपि नोपभोगक्षमत्वम्, वसन्ते नानाविधरोगोपसर्गसम्भवात्। तथा च लोकप्रसिद्धिः—"वैद्यानां

शारदी माता पिता च कुसुमाकरः" इति। 'सुभगसलिलावगाहाः' इति प्रथमपद्ये तु शकुन्तला-दुष्यन्तयोर्ग्रीष्ममध्याह्नो निर्मक्षिकः संकेतकालः सूचितः। तथाहि—'सुभगसलिलावगाहाः' इत्यनेन ग्रीष्मसन्तप्ताः सलिलावगाहार्थं मालिनीं नदीं गताः, चिरं तत्रैव जले निमग्नास्तिष्ठन्तीति न तेभ्यो भीतिः। 'पाटलसंसर्गिसुरभिवनवाताः' इत्यनेन तु लताकुञ्जादेर्वनैकदेशस्य सङ्केतस्थानस्य रम्यत्वं तादृशवनवातानामुद्दीपकत्वं च व्यज्यते। 'प्रच्छायसुलभनिद्रा' इत्यत्र प्रच्छायपदेन बहुव्रीहिणा गृहादिरूपो देशविशेषो बोध्यते, यतस्तत्रैव वृक्षच्छायापेक्षया प्रकृष्टच्छायायाः सम्भवात्। एवं च ग्रीष्ममध्याह्ने प्रसुप्तेभ्योऽपि भीतिर्नास्तीति व्यज्यते। 'दिवसाः परिणामरमणीयाः' इत्यनेन ये सलिलावगाहार्थं गतास्ते दिवसपरिणाम एव तत आगमिष्यन्ति, ये च गृहे प्रसुप्तास्ते दिवसावसान एव ततो बहिर्गमिष्यन्तीति निर्मक्षिकं सङ्केतस्थानं सङ्केतकालश्चेति सूच्यते।

'ईषदीषच्चुम्बितानि' इति पद्येन तु सुकुमारकेसरशिखानि हस्तादिना निवारणाद् गन्धलोलैर्भ्रमरैरीषदीषच्चुम्बितानि शिरीषकुसुमानि दयमाना अवतंसयन्त्यः प्रकृष्टयौवनमदसम्पन्नाः प्रमदा अनुसूया प्रियंवदा शकुन्तला च भ्रमरैर्बाध्यमानाः सूच्यन्ते। अत्रेषदीषच्चुम्बितानीत्यनेन भ्रमरकर्तृकः शकुन्तलाधरचुम्बनाभिलाषो दुष्यन्तेनोत्प्रेक्षिष्यमाणः संसूच्यते। इत्येवमत्रत्यपूर्वरङ्गस्यापि नान्द्या इव प्रस्तावनाया इव नाट्यबीजोपक्षेपित्वाद् अन्यरूपकपूर्वरङ्गापेक्षया प्राशस्त्यम्।

वासवदत्तायां तु नान्दीनामकसूत्रधारप्रयोज्यत्वेन मुनिसम्मता नान्दी न सूत्रधारेण प्रयोजिता। नापि नटैः प्रयोज्यः पूर्वरङ्गस्तैः प्रयोजितः, किन्तु सूत्रधारेण खलु पद्यद्वयमुच्चार्य केवलप्रस्तावना नाट्यबीजोपक्षेपिका कारिता। तत्र प्रथमेन पद्येन नाट्यपात्राणि पदग्रन्थिभिर्निरर्थकैर्वाक्यैकदेशैः संसूचितानि 'उदयनवेन्दुसवर्णौ' इत्यादिना। द्वितीयेन तु पद्येन वाच्यभङ्ग्यैव पात्रप्रवेशः सूत्रधारद्वारा कारित इति नान्दीपूर्वरङ्गयोर्विलोपाद् वासवदत्ताया अवरत्वं शाकुन्तलमपेक्ष्य। किञ्च, वासवदत्तायां 'नान्द्यन्ते ततः प्रविशति सूत्रधारः' इति वाक्याद् नान्दीप्रयोगोत्तरमेव रङ्गे सूत्रधारप्रवेशस्य प्रतीत्या सूत्रधारकृतैव नान्दीति वक्तुं न शक्यते, नान्द्या ग्रन्थेऽनुपन्यासात्।

अनर्घराघवे तु नान्द्यन्ते सूत्रधार इति वाक्यं द्विधा व्याख्यातुं शक्यते। तद्यथा स्वकृतनान्द्यन्ते सूत्रधार आहेत्येकं व्याख्यानं तत्तु न युक्तम्, यतो स्वकृतनान्द्यन्ते सूत्रधार आहेति न नान्दीप्रस्तावनयोः कर्तैकः सूत्रधार इति मुनेरभिमतम्, किन्तु सूत्रधारद्वयम्। तत्र प्रथमो नान्दीनामकसूत्रधारो द्वितीयस्तु स्थापक इति। तदुक्तं भरतेन—

अथ पात्राणि तत्रादौ नान्दी नान्दीं तु यः पठेत् ।

तत्रैव—

नान्दीं प्रयुज्य निष्क्रामेत् सूत्रधारः सहानुगः ॥
स्थापकः प्रविशेत् पश्चात् सूत्रधारगुणाकृतिः ।
पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते ॥
प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ।

अत्र पूर्वरङ्गं विधायेत्यस्य नटैः सहेति शेषः। एवञ्च नान्दीनाम्ना सूत्रधारेण नान्दी कर्तव्या । तदुत्तरं च नटैः सह संलापं कृत्वा तैः सह स्थापकसूत्रधारेण पूर्वरङ्गः कर्तव्यः । पूर्वरङ्गविध्युत्तरञ्च स्थापकनाम्ना सूत्रधारेण प्रस्तावनायाः पश्चिमोंऽशः प्रयोज्य इति ।

तथा चात्र सूत्रधारद्वयेऽभ्युपगतेऽपि न सूत्रधारेण नाट्यबीजोपक्षेपकः पूर्वरङ्गैः कुशीलवैः सह कृतः, किन्तु रङ्गाद्बहिरेव कुशीलवैः कृत इति पूर्वरङ्गलक्षणानाक्रान्ततैव तदीयपूर्वरङ्गस्य । तथाह्यत्र नेपथ्ये गीयते—

दिनकरकिरणोत्करः प्रियाकरः कोऽपि जीवलोकस्य ।
कमलमुकुलाङ्कपालीकृतमधुकरकर्षणविदग्धः ॥

सूत्रधार आकर्ण्य "कथमुपक्रान्तमेव नर्तकैर्यदियं दशरथोत्सङ्गाद् रामभद्राकर्षिणो विश्वामित्रस्य प्रावेशिकी ध्रुवा" इति । एभ्यश्च वाक्येभ्यः स्पष्टमेव रङ्गाद्बहिर्नटैरेव कृतः पूर्वरङ्ग इति प्रतीयते । अतः शाकुन्तलादस्यापकर्षः ।

उत्तररामचरिते तु "नान्द्यन्ते सूत्रधारः—अलमतिविस्तरेण" इति वाक्यस्यायमर्थः—नान्दीनामकसूत्रधारकृतनान्द्यन्ते स्थापकनामा सूत्रधारः प्रविशन्नेव नेपथ्ये नान्दीनामानं सूत्रधारं रङ्गे प्रविष्टं रङ्गान्निवर्तितुमादिशति—अलमतिविस्तरेणेत्यादि । अत्रापि नटैः सह स्थापकनाम्ना सूत्रधारेण प्रयोज्यः पूर्वरङ्गः शाकुन्तल इव न प्रयोजित इत्यवरत्वमस्य शाकुन्तलात् । किञ्चात्र न नान्द्यां न वा प्रस्तावनायां नाट्यबीजं वस्तु व्यङ्ग्यत्वेनोपक्षिप्तमित्यचमत्कारित्वमेतद्रूपकस्य नान्द्याः प्रस्तावनायाश्च ।

प्रसन्नराघवे तु—"नान्द्यन्ते सूत्रधारः—( परितो विलोक्य सहर्षम् )" इत्यादिना महती प्रस्तावना स्थापकनाम्ना सूत्रधारेण प्रयोजिता, यस्यां व्यङ्ग्यत्वेन वाच्यत्वेन च नाट्य-

बीजानि पात्राणि बहुभिः सूक्तिभिरुपक्षिप्तानि, तथापि न तस्य नान्दी वस्तूपक्षेपिका, नापि तत्र पूर्वरङ्गः प्रयोजित इत्यवरत्वमस्यापि शाकुन्तलात्।

मृच्छकटिके तु या नान्दी तस्यां तु न नाट्यबीजमुपक्षिप्तं न वा प्रस्तावनामध्ये नटैः सह सूत्रधारेण क्रियमाणः पूर्वरङ्गो निर्दिष्टो नाट्यबीजोपक्षेपी, किन्तु महता प्रबन्धेनाभिधाव्यञ्जने समाश्रित्य नाट्यबीजोपक्षेपिणी प्रस्तावनैव निर्दिष्टेत्यवरत्वं शाकुन्तलादेतस्य प्रकरणस्य। यत्तु जीवानन्दविद्यासागरेण मृच्छकटिकस्थितस्य नान्दीपद्यद्वयस्य नाट्यबीजोपक्षेपकत्वमुक्तम्—"अस्मिन्नेव श्लोकद्वये काव्यार्थसूचकः कश्चिदर्थो लक्षणीयः, "श्लोकैः काव्यार्थसूचकैः" इत्यालङ्कारिकवचनात्। स यथा—'संवीतजानोः' इति पदेन उपचारीकृतवसन्तसेनावधस्य चारुदत्तस्य संयमनम्। 'अन्तः प्राणावरोधव्यपगतसकलज्ञानरुद्धेन्द्रियस्य' इति वाक्येन राजद्वारोपस्थापितस्य चारुदत्तस्यावस्थावर्णनम्। यद्वा लिङ्गविपरिणामेन 'अन्तःप्राणावरोध ......'रुद्धेन्द्रियायाः' इत्युक्त्या शकारहस्तेन कण्ठनिपीडनमृताया वासवदत्ताया अवस्थावर्णनम्। तत्त्वदृष्ट्या आत्मदर्शनादिना परब्रह्मचिन्तनं हि रूपकम्, तच्च तदानीं सपुत्रायाश्चारुदत्तपत्न्या अन्तर्भाववर्णनमिति। द्वितीयश्लोके हि नीलकण्ठपदेन चारुदत्तस्य, तथा गौरीपदेन सुरूपाया वसन्तसेनाया उपलक्षणम्। 'श्यामाम्बुदोपमः कण्ठः' इत्युपमाबलेन वसन्तसेनायाः कण्ठे निपीडनजन्यः कृष्णिमा, उभयत्र लिङ्गविपरिणामेन वसन्तसेनायाः कण्ठश्चारुदत्तस्य हस्तश्च बोध्यत इति सुधीभिरनुध्यातव्यः" इति; तन्न, अलमनेन परिषत्कुतूहलविमर्दकारिणा परिश्रमेणेति सूत्रधारोक्तवाक्यविरोधात्। नान्दीपाठपरिश्रमस्य नाट्यबीजोपक्षेपकत्वे हि नाट्यविषयं परिषदः कुतूहलमभिवृद्धिमेवेष्यतीति कुतस्तस्य परिषत्कुतूहलविमर्दकारित्वम्। किञ्च, इतिहासपुराणादिप्रसिद्धकथामूलकस्य हि नाटकस्य नान्दी व्यञ्जनया नाट्यबीजोपक्षेपिकेति सम्भाव्यते। इह तु प्रकरणं कल्पितकथानकमिति। एतन्नाटकदर्शनात् प्रागेतत्कथानकसंस्मारकाभावेन कथं संस्कारेण सहकारिणानुपकृता व्यञ्जना प्रभविष्यति नाट्यबीजमुपक्षेप्तुम्, संस्कारसहकृताया एव व्यञ्जनाया अन्यत्र वस्तुव्यञ्जनसामर्थ्यदर्शनात्। किञ्च, तत्र तत्र यः खलु लिङ्गव्यत्ययः कल्पितो विद्यासागरमहाभागैस्तत्र किं बीजं प्रतिपत्तॄणां बुद्धौ किं हेतुकं चोपस्थापयिष्यतीति न विज्ञायत इति।

## शाकुन्तलप्रस्तावनावैशिष्ट्यम्

इयं च प्रस्तावना सर्वेषु नाटकेषु प्रयुज्यते। तथाहि—नान्दीपूर्वरङ्गयोरनन्तरं भारती

वृत्तिः सर्वत्रैव संस्कृतनाटकेषु प्रयुज्यते। भारतीवृत्तेः स्वरूपं तु किञ्चित् परिष्कृत्योक्तं नाट्यशास्त्रे—

या वाक्प्रधाना पुरुषप्रयोज्या
स्त्रीवर्जिता संस्कृतवाक्ययुक्ता।
स्वनामधेयैर्भरतैः प्रयुक्ता
सा भारती नाम भवेत्तु वृत्तिः॥

साहित्यदर्पणे च—

भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः।

संस्कृतबहुलो वाक्प्रधानो व्यापारो भारतीति च व्याख्यातम्। तस्याश्च भारतीवृत्तेरङ्गानि चत्वारि। तदुक्तं तत्रैव—

"तस्याः प्ररोचना वीथी तथा प्रहसनामुखे अङ्गानि" इति।

अत्रामुखं प्रस्तावना। तत्र भारतीवृत्तेरङ्गभूता वीथ्यन्या रूपकस्वरूपा त्वन्या, किन्तु भारतीवृत्त्यङ्गभूता वीथी स्वतन्त्रवीथीलक्षणलक्षितैवेति तत्सदृशी। एवं भारतीवृत्त्यङ्गभूत-प्रहसनमपि। स्वतन्त्रप्रहसनसदृशमेव तल्लक्षणलक्षितम्। एवं स्थिते भारतीवृत्त्यङ्गभूतायाः प्रस्तावनाया इतरैस्त्रिभिरङ्गैः सह यथायथमेकेन द्वाभ्यां त्रिभिर्वा सह सङ्करः। यथा रत्नावल्यां प्ररोचनया सह प्रस्तावनायाः सङ्करः। प्रस्तावनायास्तु पञ्च भेदाः। तदुक्तं साहित्यदर्पणे—

उद्घातकः कथोद्घातः प्रयोगातिशयस्तथा।
प्रवर्तकावलगिते पञ्च प्रस्तावनाभिदाः॥

तथा च शाकुन्तले को भेदः प्रस्तावनाया इति विचार्यते। तत्रावलगिताख्या प्रस्तावना शाकुन्तले विश्वनाथसम्मता तदुक्तं दर्पणे—

यत्रैकत्र समावेशात् कार्यमन्यत् प्रसाध्यते।
प्रयोगे खलु तज्ज्ञेयं नाम्नाऽवलगितं बुधैः॥

उदाजहार च शाकुन्तलीयं पद्यम्। एतन्मते सादृश्योद्भावनाद्यत्रान्यप्रयोगस्तत्रैवेयम्। प्रयोगातिशये च न सादृश्योद्भावनेति विश्वनाथाभिप्रायः। प्राचीनाः खलु प्रयोगातिशयनाम्नीं प्रस्तावनामत्राचक्षते। अस्मिन् विषये निर्धार्यते—अत्र विश्वनाथमतमेव ज्यायः। तथाहि—यत्र प्रकृते कार्ये श्लेषादिना समावेश्यान्यत्कार्यं प्रसाध्यते तदवलगितलक्षणं सर्वेषां सम्मतम्। एतच्च

लक्षणमस्ति शाकुन्तले, प्रयोगातिशये तु न श्लेषादिनाऽन्यकार्यसमावेश इति भेदः। यथा साहित्यदर्पणे कुन्दमालायां प्रयोगातिशय उदाहृतः। यत्तु सादृश्योद्भावनानुद्भावनप्रयुक्तो भेदः कैश्चिदुक्तः, स तु लक्षणागोचरत्वाद् हेयः। यद्वा 'समावेशात्' इत्यस्य श्लेषादिना सादृश्योद्भावनादित्यर्थः।

वासवदत्तायाम्—

भृत्यैर्मगधराजस्य स्निग्धैः कन्यानुगामिभिः।
धृष्टमुत्सार्यते सर्वस्तपोवनगतो जनः॥

अत्र प्रयोगातिशयो नाम प्रस्तावनाभेदः। तल्लक्षणं तूक्तं साहित्यदर्पणे—

यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते।
तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा॥

अत्र परिषदुन्मुखीकरणाय किञ्चिद्विज्ञापयितुमिच्छता सूत्रधारेण नेपथ्ये कलकलं श्रुत्वा विज्ञापनामप्रयुज्यैव 'भृत्यैर्मगधराजस्य............' इत्यनेन पद्मावतीपरिचारकाणां मगधराजभृत्यानां प्रवेशं सूचयित्वा निष्क्रान्तेन स्वप्रयोगमतिशयान एव प्रयोगः प्रयुक्तः।

मृच्छकटिके तु सूत्रधारस्य वाक्यार्थमादाय मैत्रेयरूपपात्रस्य प्रवेशात् कथोद्घातरूपा प्रस्तावना। तदुक्तम्—

सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा।
तेन पात्रप्रवेशश्चेत् कथोद्घातः स उच्यते॥

उत्तररामचरिते तु—प्रयोगातिशय इति केचित्। तथाहि रामभद्राभिषेचनमधिकृत्य नटानामन्योऽन्यालापे प्रवृत्ते सीतां समाश्वासयितुं रामभद्रस्य वासगृहप्रवेशरूपस्य प्रयोगान्तरस्य प्रयुक्तेः, तेनैव पात्रप्रवेशदर्शनात्। केचित्त्ववलगितमाहुः। अन्ये त्वत्र प्रवर्तकमाहुः। वस्तुतस्त्वत्र प्रयोगातिशय एव युक्तः, श्लेषादिनात्र सादृश्योद्भावनाऽभावेनावलगितस्याप्रसक्तेः। नाप्यत्र प्रवर्तकम्, प्रवृत्तकालवर्णनाया अत्राभावात्।

अनर्घराघवे तु 'दिनकरकिरणोत्कर' इत्यत्र पद्ये यद्यपि कमलमुकुलाङ्कपालीकृतमधुकरकर्षणविदग्धे दिनकरकिरणोत्करे दशरथोत्सङ्गाद्रामभद्राकर्षिणो विश्वामित्रस्य सादृश्यं व्यज्यते। तथापि न श्लेषादिना सादृश्योद्भावनमत्र, किन्तु सादृश्यमत्र तिरोहितम्। तस्मादत्र परिशेषात् प्रयोगातिशय एव।

अथेदं विमृश्यते—यद्यपि शाकुन्तलप्रस्तावनाऽवलगिताख्या, तथाप्यवलगितस्य किंनामात्र भेदः ? यतोऽवलगितस्यापि बहवो भेदा बहुधा वर्णिताः शास्त्रकृद्भिः। तद्यथा दशरूपके—

यत्रैकत्र समावेशात् कार्यमन्यत् प्रसाध्यते।
प्रस्तुतेऽन्यत्र वान्यत् स्यात् तच्चावलगितं द्विधा ॥ इत्युक्तम्।

तत्राद्यं यथोत्तरचरिते समुत्पन्नवनविहारदोहदायाः सीताया दोहदकार्येऽनुप्रविश्य जनापवादादरण्ये त्यागः। द्वितीयं यथा छलितरामे—"रामः—लक्ष्मण! तातवियुक्तामयोध्यां विमानस्थो नाहं प्रवेष्टुं शक्नोमि। तदवतीर्य गच्छामि।"

कोऽपि सिंहासनस्याधःस्थितः पादुकयोः पुरः।
जटावानक्षमाली च चामरी च विराजते ॥

इति भरतदर्शनकार्यसिद्धिः। मन्दरमरन्देऽप्युक्तम्—

अन्यकार्यमिषादन्यकार्यस्य करणं तथा।
द्विधाऽवलगितं त्वन्यकार्याच्च स्वार्थसाधनम् ॥ इति।

काव्येन्दुप्रकाशे तु—

यः पात्रस्य प्रवेशस्तद्वलितं चान्यवर्णनात्।

इति विशेषोऽभिहितः। अन्यपदार्थवर्णनेन पात्रप्रवेशो वलितमिति तदर्थः। प्रवृत्तकालवर्णनानुरूपपात्रप्रवेशलक्षणात् प्रवर्तकतो यत्किञ्चिद्वर्णनात् पात्रप्रवेशरूपवलितस्य भेदः स्पष्ट एव।

यद्यप्येष्ववलगितभेदेषु शाकुन्तले—'यत्रैकत्र समावेशात्' इति लक्षणलक्षितोऽवलगितभेद एवेति प्राङ् निर्धारितम्, तथापि "यः पात्रस्य प्रवेशस्तद्वलितं चान्यवर्णनात्" इति काव्येन्दुप्रकाशोक्तो वलितनामाऽवलगितभेदोऽपि शाकुन्तलेऽस्ति। तथाहि—'तवास्मि गीतरागेण' इत्यत्रातिरंहसाऽङ्गरागसंसृष्टगीतवर्णनाद् दुष्यन्तस्य प्रवेश इति वलितमप्यस्तीति शाकुन्तलप्रस्तावनावाक्येऽवलगितभेदद्वयसत्त्वात् शाकुन्तलप्रस्तावनाया ज्यायस्त्वम्। किञ्च, प्रागुक्तेऽवलगितभेदपञ्चकेऽपि 'यत्रैकत्र समावेशात्' इति भेदस्यैव सर्वापेक्षामनोरमत्वम्, वर्ण्यमानसादृश्योद्भावनपूर्वकं तत्र पात्रप्रवेशात्, अस्य चोपमाभित्तिकत्वेनान्यापेक्षया चमत्कारकारित्वात्।

## नाटकीयेतिवृत्तविचारः

शाकुन्तले इतिवृत्तमाधिकारिकम्। तल्लक्षणं यथा दर्पणे—

अधिकारः फले स्वाम्यमधिकारी च तत्प्रभुः।
तस्येतिवृत्तं कविभिराधिकारिकमुच्यते ॥ इति।

अत्र प्रासङ्गिकमितिवृत्तं तु बालरामायणादौ सुग्रीवादिचरितवन्नास्ति किमपि। इदमपि च शाकुन्तलस्य प्रोत्कर्षाधायकमेव यत्प्रासङ्गिकवस्तुविरहितमत्र केवलमाधिकारिकं वृत्तमिति। प्रासङ्गिकचरितरसास्वादनसमाकृष्टमनसां हि सामाजिकानामाधिकारिकेतिवृत्तरसास्वादो वस्तुना कालेन च व्यवहित इव तिरोहित इव च भवतीति।

## पताकास्थानकविमर्शः

कविना नाटकीयवस्तुनि पताकास्थानकं सुविचार्य योजनीयं भवति। तल्लक्षणं तूक्तं साहित्यदर्पणे—

यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते।
आगन्तुकेन भावेन पताकास्थानकं तु तत्॥

तस्य चत्वारो भेदास्तत्रैवोक्ताः। तेषां लक्षणानि यथा—

सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः।
पताकास्थानकमिदं प्रथमं परिकीर्तितम्॥
वचः सातिशयं श्लिष्टं नानाबन्धसमाश्रयम्।
पताकास्थानकमिदं द्वितीयं परिकीर्तितम्॥
अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत्।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते॥
द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।
प्रधानार्थान्तराक्षेपी पताकास्थानकं परम्॥

तेष्वाद्यं यथा शाकुन्तले प्रथमेऽङ्के—

"सख्यौ! तदा जीवितसर्वस्वेनापीममतिथिविशेषं कृतार्थं कुर्यात्" इति।

अत्र शकुन्तलारूपं विषयं प्रच्छाद्य तस्यैव लाभरूपाया नाटकीयप्रधानार्थसम्पत्तेः सूचनात् प्रथमं पताकास्थानकं प्रदर्शितम्।

द्वितीयं पताकास्थानकं यथा तत्रैव तृतीयेऽङ्के—

(नेपथ्ये) "चक्रवाकवधु! आमन्त्रय सहचरम्, ननूपस्थिता रजनी"। अत्र—

"त्वमपि शकुन्तले! दुष्यन्तेन विच्छिन्ना भव, यतो गौतमी समागता"

इति प्रस्तुतस्याप्रस्तुतेन गम्यमानत्वादप्रस्तुतप्रशंसालङ्कारः। अत एवात्र रजनी समागतेत्युक्त्या आगन्तुकभावेनान्यस्य चिह्नस्य प्रयोगात् पताकास्थानकमेव। तच्च 'चक्रवाकवधु!'

इत्युक्त्या शकुन्तलाक्लेशकरवाक्यप्रयोगाद् द्वितीयं स्थानम्। तृतीयं पताकास्थानकं यथा तत्रैव पञ्चमेऽङ्के—

अभिनवमधुलोभभावितस्तथा परिचुम्ब्य चूतमञ्जरीम्।
कमलवसतिमात्रनिर्वृतो मधुकरविस्मृतोऽस्येनां कथम्॥

अत्र हे मधुकरकामुक! एतां पूर्वोपभुक्तां कथं विस्मृत इत्युपालम्भः। एतेन राज्ञः शकुन्तलाविस्मरणं सूचितम्। अत्र प्रत्युत्तरस्यापरिस्फुटत्वेऽपि राजानं प्रति तस्य गम्यमानतया न लक्षणासङ्गतिः।

चतुर्थं पताकास्थानकं तु सप्तमेऽङ्के—"राजा (निमित्तं सूचयित्वा)—

मनोरथाय नाशंसे किं बाहो! स्पन्दसे मुधा।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते॥

(नेपथ्ये) मा खलु चपलतां कुरु, यत्र तत्रैवात्मनः प्रकृतिं दर्शयसि" इति।

अत्र हि शकुन्तलालाभसंशयाकुलस्य राज्ञो मनोरथायेत्यादिभाषणस्य प्रत्युत्तरीभूतेन नेपथ्यविहितेन—निषेधवचसा 'चपलतां परिहर तव प्रियलाभो नूनं भविष्यति' इत्यस्यापि सूचनात् चतुर्थं पताकास्थानकमिदम्। एतल्लक्षणं तु "द्व्यर्थो वचनविन्यासः" इत्यादिकं पूर्वमेवोक्तम्। यत्त्वत्र केचित्तृतीयं पताकास्थानकं वदन्ति, तन्न मनोरमम्। तथाहि—

अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत्।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते॥ इति लक्षणम्।

अस्य चार्थोपक्षेपकमिति, लीनमिति, श्लिष्टप्रत्युत्तरोपेतमिति च विशेषणत्रयस्य तृतीयचतुर्थपताकास्थानकसाधारणस्यात्र सत्त्वेऽपि सविनयमित्यसाधारणस्य विशेषणस्यात्रासत्त्वात्। इदं हि प्रत्यक्षं भर्त्सनवचनं बालं प्रति वृद्धायास्तापस्याः। नह्यत्र विनयस्य सम्बोध्ये वक्तरि वा गन्धोऽप्यस्ति।

## कथांशसमीक्षा

अथ साम्प्रतमभिज्ञानशाकुन्तलेऽभिनेयत्वेन कल्पितः कथांशः समीक्ष्यते। नाटके हि सुखाभिनेयकथाकल्पनेऽपि कवेरद्भुतं नैपुण्यमिति। अत्रापि च नाटके पद्मपुराणीया कथा

बहुवर्षसाध्या तथा कल्पिता, यथाऽतिलघ्वी सुखाभिनेया च सम्पन्ना। सूचितश्च दीर्घः कथांशस्तत्र तत्रार्थोपक्षेपककल्पनामुखेन। तदुक्तं दर्पणे—

अङ्केष्वदर्शनीया या वक्तव्यैव च सम्मता।
या च स्यादवर्षपर्यन्तं कथा दिनद्वयादिजा॥
अन्या च विस्तरा सूच्या सार्थोपक्षेपकैर्बुधैः॥

अङ्केष्वदर्शनीया कथा युद्धादिकथा।
वर्षादूर्ध्वं तु यद्वस्तु तत्स्याद्वर्षादधोभवम्।

उक्तं हि मुनिना—

अङ्कच्छेदे कार्यं मासकृतं वर्षसञ्चितं वापि।
तत्सर्वं कर्तव्यं वर्षादूर्ध्वं न तु कदाचित्॥

एवञ्च चतुर्दशवर्षव्यापिन्यपि रामवनवासे ये ये विराधवधादयः कथांशास्ते ते वर्षवर्षावयवदिनयुग्मादीनामन्यतमेन सूचनीया न विरुद्धाः।

## अर्थोपक्षेपकविमर्शः

दिनावसाने कार्यं यद्दिने नैवोपपद्यते।
अर्थोपक्षेपकैर्वाच्यमङ्कच्छेदं विधाय तत्॥

के तेऽर्थोपक्षेपका इत्याह—

अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ।
चूलिकाङ्कावतारोऽथ स्यादङ्कमुखमित्यपि॥

तत्रार्थोपक्षेपकेषु विष्कम्भकलक्षणं तद्भेदाश्च यथा साहित्यदर्पणे—

वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः।
शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यप्रकल्पितः॥

इति विष्कम्भस्य भेदत्रयं प्रदर्शितम्। अयमत्र निष्कर्षः—शुद्धसङ्कीर्णभेदेन द्विविधो विष्कम्भकः। तत्रैकद्विमध्यमपात्रप्रयुक्तः संस्कृतात्मकः शुद्धः। मध्यमनीचपात्रप्रयुक्तः संस्कृतप्राकृतात्मकः

संकीर्णः। तत्र शाकुन्तले तृतीयाङ्कस्यादावेकमध्यपात्रप्रयोजकत्वाच्छुद्धो विष्कम्भको यथा शिष्यद्वारा प्रयोजितः। अनेन च विष्कम्भकेन राज्ञस्तपोवनाभ्यन्तरगमनं राक्षसानपसार्य ऋषिकार्यनिर्वाहश्च इत्यतीतवृतान्तसूचना। शकुन्तलाया आतपलङ्घनव्याजेन विरहावस्थावर्णनम्, पश्चात् शकुन्तला-दुष्यन्तयोर्विघटनार्थं शान्त्युदकहस्ताया गोतम्याः शकुन्तलासकाशे आगमनं चेति भविष्यत्सूचन-मवगन्तव्यम्।

तत्रैव चतुर्थाङ्कस्यादौ सङ्कीर्णविष्कम्भकः। अत्र केचिदाहुः—अत्रानभिनीतानां प्रति-सिद्धानाञ्च वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकत्वाद् विष्कम्भकः। स चात्र मध्यमपात्राभ्यां केवलप्राकृतेन प्रयोजितत्वात् शुद्धः। तत्र वृत्तः प्रतिषिद्धश्च कथाभागः—प्रथमं शकुन्तलापरि-णयस्ततो दुर्वाससः शापः। वर्तिष्यमाणं चाङ्गुरीयकदर्शनेन शापावसानमित्यवगन्तव्यमिति। अत्र शुद्धो विष्कम्भ इत्ययमंशो न युक्तः, नीचमध्यपात्रप्रयोजितत्वेन सङ्कीर्णत्वस्यैवौचित्यात्। अन्यत्तु सर्वं युज्यते। यस्तु केवलप्राकृतेन प्रयोजितत्वादिति हेतुरुक्तः स विरुद्धोऽसिद्धश्च। अत्र दुर्वासस ऋषित्वेऽपि मध्यपात्रत्वं मनुष्यत्वं कोपबाहुल्यञ्चापेक्ष्य। अत्रैव च विष्कम्भके प्रवेशकोऽपि नान्तरीकतया सन्निविष्टो द्रष्टव्यः। तत्र प्रियंवदानुसूययोर्वाकोवाक्यं यावत् प्रवेशकः। तदादि दुर्वासःशापान्तञ्च प्रकरणं मिश्रविष्कम्भकः। प्रवेशकलक्षणं यथा साहित्यदर्पणे—

प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा॥

तत्र विष्कम्भको वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः संयोजकश्च। तदिदं यद्यपि प्रवेशकेऽप्यस्ति, तथापि पात्रवैलक्षण्यात् तयोर्भेदोऽवगन्तव्यः।

अथ शाकुन्तले चूलिका। तत्र चूलिकालक्षणं साहित्यदर्पणे—

अन्तर्जवनिकासंस्थैः सूचनार्थस्य चूलिका॥ इति।

अत्र पात्रविशेषो न निर्दिष्टः। काव्येन्दुप्रकाशे तु चूलिकालक्षणम्—

अनिर्गता प्रविष्टैश्च नेपथ्यान्तर्गतैस्तथा।
प्रयोजिता मध्यपात्रैः सूचिता चूलिका भवेत्॥
कर्तव्याद्येतराङ्केषु स्यादादौ मध्य एव वा।
सा खण्डाखण्डभेदेन द्विविधा परिकीर्तिता॥
आद्यान्तः स्याद् द्वितीया तु सप्रवेशविनिर्गमा।

यस्यां प्रवेशनिर्गमौ प्रत्यक्षसिद्धौ साङ्कबहिर्भूता द्वितीया चूलिकेति। अत्र मध्यपात्रप्रयोजितत्वं चूलिकाया उक्तम्। तथा चैतस्य लक्षणद्वयस्येयं व्यवस्था—प्रयोजिता मध्यपात्रैरिति काव्येन्दुप्रकाशे, मध्यपात्रैरित्युदाहरणं न त्ववधारणमित्यन्तर्जवनिकासंस्थैरिति साहित्यदर्पणे पात्रसामान्यस्योक्तत्वात्। तथाहि शाकुन्तले प्रथमेऽङ्के—"भोः! भोः! तपस्विनः" इत्यारभ्य "शलभसमूह इवाश्रमद्रुमेषु" इत्यन्तभागे, द्वितीयेऽङ्के—"हन्त सिद्धार्थौ स्वः" इत्यत्र, तृतीयाङ्के—"चक्रवाकवधु! आमन्त्रय सहचरं ननूपस्थिता रजनी" इत्यत्र, चतुर्थेऽङ्के—"कथमतिथिं मां परिभवसि" इत्यारभ्य "कथां प्रमत्तः प्रथमं कृतामिव" इत्यन्तभागे, पञ्चमेऽङ्के—"अभिनवमधुलोभभावितः" इति पद्ये, तथा "आश्चर्यम् आश्चर्यम्" इत्यंशे, षष्ठेऽङ्के च—"एष त्वामभिनवकण्ठशोणितार्थी" पद्ये च यथायथं मध्यनीचपात्रप्रयोजितत्वयोर्दर्शनाच्च। एतदपि च शाकुन्तलस्य महद्वैशिष्ट्यं यद्बहुचूलिकावत्त्वमिति।

अङ्कावतारो यथाऽभिज्ञानशाकुन्तले पञ्चमाङ्के पात्रैः सूचितः षष्ठाङ्कः पञ्चमाङ्कस्याङ्गविशेष इवावतीर्णः। अनेन ह्यङ्कावतारेण अङ्गुलीयकरूपाभिज्ञानावाप्तिः तथा राज्ञो दुष्यन्तस्य शकुन्तलापरिणयस्मरणात् सम्प्रति विरहसम्भावनया पर्याकुलचित्ततेति च सूचितम्। अङ्कावतारलक्षणं तु साहित्यदर्पणे—

> अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः।
> यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः॥ इति।

प्राञ्चस्तु नीचपात्रप्रयोजितत्वात् प्रवेशकोऽयमिति मन्यमानाः षष्ठाङ्कस्यादावन्तर्भावयन्तीति।

वस्तुतस्त्वङ्कावतार एव युक्तः। तदुक्तं मुनिना एकोनविंशाध्याये—

> अङ्कान्तरेऽथवाङ्के निपतति यस्मिन् प्रयोगमाश्रित्य।
> बीजार्थयुक्तियुक्तो ज्ञेयो ह्यङ्कावतारोऽसौ॥ इति।

अत्र ह्यङ्कावतारस्य बीजार्थयुक्तियुक्तत्वम्। तन्न प्रवेशके। तथा चाङ्कावतारस्यासाधारणधर्मदर्शनाद् अङ्कावतार एवायम्। अत एव साहित्यदर्पणेऽपीदमङ्कावतारत्वेनैवोदाहृतम्।

शाकुन्तले षष्ठाङ्कस्यान्ते राजमातलिसंवादेनाङ्कास्यं नामार्थोपक्षेपकः सूचितः। अङ्कमुखलक्षणं तु साहित्यदर्पणे—

यत्र स्यादङ्क एकस्मिन्नङ्कानां सूचनाऽखिला ।
तदङ्कमुखमित्याहुर्बीजार्थख्यापकं च तत् ॥ इति,
अङ्कास्यपात्रैर्वाङ्कास्यं छिन्नाङ्कस्यार्थसूचनात् ॥ इति च ।

तत्रान्त्यलक्षणमेवात्र सङ्घटते । मुनिरप्याह—

विश्लिष्टमुखमङ्कस्य स्त्रिया वा पुरुषेण वा ।
यदुपक्षिप्यते पूर्वं तदङ्कमुखमुच्यते ॥ इति ।

एतदप्यत्र संगच्छते । अत्र हि राजमातलिसंवादेन राजविदूषककथाविच्छेदे उत्तराङ्कमुखसूचनादङ्कास्यम् । अथेदानीं समीक्षते शाकुन्तलस्य विष्कम्भको यथास्थानं प्रयुक्तो न वेति । तत्राद्यपक्ष एव निर्धारितो विद्वद्भिः । तदुक्तं साहित्यदर्पणे—

यदा तु सरसं वस्तु मूलादेव प्रवर्तते ।
आदावेव तदाङ्के स्यादामुखाक्षेपसंश्रयः ॥

अत्र आमुखाक्षेपसंश्रय आमुखसूचितमिति व्याख्यातं रामचरणतर्कवागीशैः । उदाहृतं च यथा शाकुन्तल इति । अत्र ह्यादावेवाङ्के आमुखः सूचितो वर्तिष्यमाणकथानां निदर्शको विष्कम्भको नीचमध्यपात्रप्रयोजितत्वाद् मिश्र इति । आमुखाश्रितविष्कम्भके वृत्तकथांशनिदर्शकत्वं तु न सम्भवत्येवेति न तत्सम्पादने निवेशः कार्य इति ।

( सावशेषम् )



# अवतारतत्त्वस्य समीक्षा

श्रीकृष्णमणित्रिपाठी, वा० सं० वि० वि० पुराणेतिहासव्याख्याता।

अवतारतत्त्वं हिन्दुधर्मस्यास्त्येकः प्रधानो विषयः। वेदेषु केवलमवतारस्याभासमात्रमस्ति, किन्त्ववतारतत्त्वस्य विस्तृतं विवेचनं पुराणेष्वेवास्ति। उपासनाप्रणाल्या सहावतरतात्त्वस्य महान् घनिष्ठः सम्बन्धो विद्यते। यद्यपि धर्मान्तरेष्वपि रूपान्तरेणावतारतत्त्वस्य सिद्धान्तः समुपलभ्यते। यथा बौद्धधर्मे भगवतो बुद्धस्याराधना, जैनधर्मे तीर्थङ्कराणां समुपासना, इस्लामधर्मे पैगम्बराणां पूजा, ईशाईधर्मे ईशामसीहस्येश्वरपुत्रत्वेन स्वीकारः। एवं विश्वस्य सर्वधर्मावलम्बिनो येन केन प्रकारेणावतारतत्त्वं स्वीकुर्वन्त्येव, तथापि हिन्दुधर्मस्येदं वैशिष्ट्यं वर्तते यदेतदीयमवतार-तत्त्वस्य विज्ञानमेकस्यां सुदृढभित्तौ स्थितं वर्तते। वेदपुराणदर्शनशास्त्रानुसारमीश्वरो मणिमालायां सूत्रमिव सर्वत्र व्यापकोऽस्ति। तस्य चित्कला उद्भिज्जस्वेदजाण्डजजरायुजमानवदानव-देवादिपिण्डेषु व्यापिकाऽस्ति। अत एवेश्वरः सर्वान्तर्यामी सर्वशक्तिमान् सर्वव्यापकश्च कथ्यते। सर्वव्यापित्वेऽपीश्वरस्य चित्कलाया विकासे नियमोऽस्ति। यथोद्भिज्जयोनिष्वेकस्या एवेश्वरीय-कलाया विकासो विद्यते, स्वेदजेषु द्वयोः, अण्डजेषु तिसृणाम्, जरायुजेषु चतसृणां कलानां विकासो वर्तते। मनुष्येषु पञ्चकलातोऽष्टकलापर्यन्तं विकासो भवति। अष्टकलातोऽधिकानां कलानां धारणसामर्थ्यं मनुष्येषु न तिष्ठतीति हेतोरधिकानां कलानां यत्र विकासो भवति तच्छरीरं दिव्यैरुपादानैराविर्भवति। अष्टकलातोऽधिकाः कला अवतारकलाः कथ्यन्ते, ८ कलातः १५ कला-पर्यन्तं विकासोंऽशावतारेषु भवति। पूर्णावतारे च १६ कलानां विकासो जायते। अतो भगवतोऽ-वतारा विभिन्नासु कलासु भवन्ति। तथा चोक्तं शम्भुगीतायाम्—

> ममैवैका कलाशक्तेरुद्भिज्जेषु विकासते।
> स्वेदजेषु कलाद्वैतमण्डजेषु कलात्रयम्॥
> चतस्रश्च कला भान्ति जरायुजगणेऽखिले।
> पञ्चकोशप्रपूर्णत्वान्मर्त्येषु प्रायशोऽमराः॥
> आकलापञ्चकादष्ट कला नूनं चकासते।
> नवारभ्य कला यावत् षोडशं मे यथायथम्॥

संविकास्यावतारेषु नानाकेन्द्रोद्भवेषु च।
कुत्रचिन्मे प्रपूर्यन्तेऽवतारे पूर्णसंज्ञके॥
(४।९-१२)

यथा १६ कलाभिर्युक्तश्चन्द्रमाः पूर्णः कथ्यते, तथैव यत्रेश्वरस्य षोडशापि कला आविर्भवन्ति स ईश्वरस्य पूर्णोऽवतारो निगद्यते। तथा चोक्तं तैत्तिरीयब्राह्मणे—"षोडशकलो वै पुरुषः", छान्दोग्योपनिषदि च—"षोडशकलः सौम्य! पुरुषः"। सर्वेष्ववतारेषु कृष्णावतारः पूर्णावतार आसीत्। तथाहि श्रीमद्भागवतम्—

अन्ये चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्।
इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे॥
(१।३।२७)

एतद्वचनानुसारं स्वयं परब्रह्म परमात्मैव श्रीकृष्णरूपेणाविर्भूत आसीत्।

भक्तानां प्रार्थनया स्वयं परमात्मा मायायाः संयोगेन नानारूपेष्ववतरति। तथा च श्रुतिः—

"इन्द्रो मायाभिः पुरुरूप ईयते"।
(ऋग्वेदे ६।४७।१८)

यजुर्वेदेऽपि—

प्रजापतिश्चरति गर्भेऽन्तरजायमानो बहुधा विजायते।
(३१।१९)

प्रजापतिर्भगवान् स्थूले गर्भे उत्पद्यते। वस्तुतोऽजन्मापि सोऽनेकेषु रूपेषु जायते। किञ्च, समस्तस्य चराचरस्य रक्षार्थं ज्ञानस्वरूपः परमात्मा विभिन्नेषु रूपेष्ववतरति। तस्यावतारो धार्मिकाणां कृते सुखकरो भवति, किन्त्वधार्मिकाणां कृते दुःखाय जायते। तथा चोक्तं श्रीमद्भागवते—

विभर्षि रूपाण्यवबोध आत्मा क्षेमाय लोकस्य चराचरस्य।
सत्त्वोपपन्नानि सुखावहानि सतामभद्राणि मुहुः खलानाम्॥
(१०।२।२९)

## अवतारतत्त्वस्य समीक्षा

### अवतारप्रयोजनम्

अल्पज्ञत्वाज्जीवः सर्वज्ञो भवितुं नार्हति, किन्तु सर्वव्यापित्वादीश्वर एव सर्वज्ञोऽस्ति। सर्वज्ञत्वादेवेश्वरस्यावतारो भवति। ब्रह्माण्डस्य रक्षको भगवान् विष्णुरेवास्ति। अतस्तस्यैवावतारो भवति। यदा संसारे साधारणशक्तितः कार्यं न प्रचलति, धर्मस्य ह्रासो भवति, अधर्मः प्रवर्द्धते, गावः सीदन्ति विषीदन्ति च ब्राह्मणाः, असुरभावापन्ना भावना सज्जनानुद्वेजयति, पापाचारै-राक्रान्ता भवति भूमिः, तदा स्वयमाविर्भूय भगवान् धर्मं रक्षति, अधर्मं नाशयति, दुर्जनान्निहत्य सज्जनान् पालयति। तथा चोक्तं भगवता कृष्णेन गीतायाम्—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।<br>
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥<br>
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।<br>
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥ (४।७-८)

महाभारते आश्वमेधिकपर्वणि ५३-५५ अध्यायेष्ववतारवादस्य पोषक एकः प्रसङ्ग एवमुपतिष्ठते। यदा महाभारतसंग्रामं समाप्य भगवान् श्रीकृष्णो द्वारकां प्रति परावर्तमान आसी-त्तदा मध्येमार्गं महातपस्विन उत्तङ्कनाम्नो मुनेः साक्षात्कारो जातः। दृष्ट्वैव भगवन्तं श्रीकृष्णं सञ्जातरोषो मुनिरुवाच—कृष्ण! कौरवा अपि तव सम्बन्धिन आसन्। यदि भगवान् इच्छेत्तर्हि युद्धं स्थगितं स्यात् परं शक्तौ विद्यमानायामपि न ते संरक्षितास्त्वया। अतोऽहं त्वां शपे। एवं क्रोधाविष्टस्य तस्य वचनं निशम्य विहस्याह भगवान् श्रीकृष्णः—मुनिपुङ्गव! व्यर्थं तपसो दुरुप-योगो न विधेयः। प्रथममहं ज्ञेयस्ततः शापो देयः। अहमस्मि समस्तस्य जगतः कारणम्। अखिलं विश्वं मत्त एव प्रादुर्भवति। वेदा मामेव स्तुवन्ति। सर्वैर्वेदैरहमेवास्मि वेद्यः। अहमेव समये समयेऽवतीर्य भूभारं हरामि धर्मधुरं च व्यवस्थापयामि। यदाहं देवयोनाववतरामि तदा देववद् व्यवहरामि, यदा च मानवशरीरेऽवतरामि तदा साधारणमनुष्य इव व्यवहरामि। अत एव पाण्डवानां सन्धिप्रस्तावमादाय स्वयमहं कौरवाणां सभामध्ये गतवानासम्। अनुनयविनय-पूर्वकं तान् सन्मार्गे नेतुं विविधान् प्रयत्नान् अकार्षं परं मदान्धास्ते किमपि न श्रुतवन्तः, परिणामे ते पाण्डवैः परलोकं प्रापिता इति। एतत्सर्वं याथातथ्येनाकर्ण्य मुनेरज्ञानं दूरीभूतम्। भग-वद्दर्शनेनानन्दनिमग्नः सोऽर्जुनवद् भगवतो विराड्रूपं द्रष्टुं प्रार्थयाञ्चकार। ततः प्रसन्नो भगवान् विश्वरूपं प्रदर्श्य द्वारकां प्रति प्रस्थितः।

यथा निराकारा वाय्वग्निप्रभृतयः सर्वव्यापित्वेऽपि संसारस्य कल्याणाय साकारे काष्ठादि-रूपे परिणताः सन्तो लोकानुपकुर्वन्ति, तथैव सर्वव्यापको निराकारोऽपीश्वरः स्वमायायोगेन भक्तानां प्रार्थनया धर्मगोद्विजदेवसज्जनानां रक्षायै मानवादिशरीरेषु प्रादुर्भवति। अत एवोक्तं गीतायाम्—

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ४।६।

विष्णुपुराणेऽपि—

गोविप्रद्विजसाधूनां छन्दसामपि चेश्वरः।
रक्षामिच्छन् तनूर्धत्ते धर्मस्यार्थस्य चैव हि ॥ ४।१७।

श्रीमद्भागवते च—

भावयत्येव सत्त्वेन लोकान् वै लोकभावनः।
लीलावतारानुरतो देवतिर्यङ्नरादिषु ॥ १।२।३४।

सर्वव्यापिनः परमात्मनः शक्तिरपि व्यापिकास्ति, जडचेतनात्मकदृश्यद्वारैव तस्या विकासो भवति। अत एव विश्वस्मिन् यत्किञ्चिद् दृश्यते तत्सर्वं तच्छक्तिरेवास्ति। तथा चोक्तं पञ्चदश्याम्—

सर्वशक्तिमयं ब्रह्म नित्यमापूर्णमद्वयम्।
यथोल्लसति शक्त्यासौ प्रकाशमधिगच्छति ॥ १३ । ५।

यस्मिन् मानवपिण्डेऽवतारो भवति तत्र द्विविधं कार्यं जायते। एकं भगवतो विष्णोः कार्यं यद् अवतारी प्रतिनिधिरूपेण कुरुते। द्वितीयं जीवस्य भोगकार्यं यद् जन्मान्तरीयप्रारब्धानु-सारं भोक्तव्यमेव भवति। यथा भगवान् श्रीकृष्णो धनुर्धारिणमर्जुनं प्रोक्तवान् यत् पार्थ! मम तव चेतः पूर्वमनेकानि जन्मानि जातानि। अहं सर्वज्ञत्वात्तानि जानामि त्वं चाल्पज्ञत्वान्न स्मरसि।

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन!
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥
(गीता ४।५)

## अवतारतत्त्वस्य समीक्षा

पुराणानुसारं कृष्णजन्मनः पूर्वमेकस्मिन् जन्मनि भगवान् श्रीकृष्णो नारायणर्षिरूपेण, अर्जुनश्च नरनामकर्षिरूपेणावतीर्य बदरिकाश्रमे परमं तपः तेपाते। एवं भगवतोऽनेकानि जन्मानि प्रादुरभवन्। यस्मिन् जन्मनि भगवान् श्रीकृष्णो निःशस्त्रो भूत्वा महाभारतसमरमकारयत्। बाल्याद् यावज्जीवं लोकमर्यादाविघातकान् अनेकान् असुरान् जघान। भक्तान् अलौकिकीर्विभूतीः प्रादर्शयत्। सर्वोपनिषत्सारमद्भुतं दार्शनिकं गीताग्रन्थमर्जुनमुपदिदेश। एतानि यानि लोकातीतानि कर्माणि कृतवान् भगवान्, तानि जगद्रक्षकस्य भगवतो विष्णोः प्रातिनिध्येनावतीर्य कृतवान्। तथा तत्रैव जन्मनि बाललीलाविलासो रासलीला, द्वारकायां भोगसमूहः, अन्ते च किरातत्राणेन देहपात इत्यादीन्यशुभानि कार्याणि पूर्वजन्मार्जितानां कर्मणां प्रतिक्रियारूपेण जातानि। एवं भगवतो रामचन्द्रस्य ताडकामारीचसुबाहुरावणादिवधो विष्णोः प्रातिनिध्येन जातः, किन्तु वनवास-सीताहरण-विलापादिदुःखजातं प्राक्तनकर्मपरिणामरूपमेवाजायत।

भारतीयाः सर्वसम्प्रदायाचार्या अवतारतत्त्वं स्वीकृतवन्तः। अद्वैतसम्प्रदायप्रवर्तकाः श्रीस्वामिशङ्कराचार्यपादा गीताभाष्यस्योपोद्घाते भगवन्तं श्रीकृष्णमादिपुरुषस्य नारायणस्यावतारं स्वीकृतवन्तः—"अजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वरूपोऽपि सन् स्वमायया देहवान् इव जात इव च लोकानुग्रहं कुर्वन्निव लक्ष्यते।"

परमो दयालुः परमात्मा भगवान् विष्णुः प्राणिष्वहैतुकीं दयां कृत्वा विश्वस्य कल्याणायास्मिन् धरातलेऽवतरति। भगवान् विष्णुर्दयासमुद्रः। प्राणिषु कृपा तस्यास्ति स्वभावः। यदा यदा भक्तेष्वापत्तय उपतिष्ठन्ते, दुष्टानामत्याचारा असह्याश्च भवन्ति, तदा तदा भूभारं हर्तुं भगवतोऽवतारो भवति। श्रीमद्भागवते दशमस्कन्धे वत्सहरणप्रसङ्गे ब्रह्मणा कृतायां स्तुतौ तेन प्रोक्तं यद् यद्यपि भगवान् अजन्मा तथापि जीवेषु दयया देवर्षिमानवपशुपक्षिजलचरयोनिष्ववतीर्य दुर्जनानां मदमन्थनं सत्पुरुषाणां च पालनं करोति—

> सुरेष्वृषीकेश! तथैव नृष्वपि तिर्यक्षु यादस्स्वपि तेऽजनस्य।
> जन्मासतां दुर्मदनिग्रहाय प्रभो! विधातः! सदनुग्रहाय च॥
>
> (१०।१४।२०)

अवतारस्य प्रयोजनं प्रदर्शयता भगवता व्यासेन स्पष्टमुक्तं यद् भगवतोऽवतारो न केवलं लोकद्वेषिणामसुराणां वधायैव भवति, किन्तु मनुष्याणां शिक्षार्थमपि भगवदवतारो भवति। तथाहि—

> मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः।

अतो जीवेषु दयां कृत्वा दर्शनस्पर्शनव्यवहारभाषणाचरणादिद्वारा सौविध्येन भगवत्प्राप्तये भगवतोऽवतारो भवति। अवतारिणां महापुरुषाणां दिव्यचरित्रानुकरणेन संसारसागरादनायासेन तर्तुं शक्नोति मानवः।

## अवतारसंख्याविमर्शः

भगवतो विष्णोः कियन्तोऽवतारा भवन्तीति जिज्ञासायां श्रीमद्भागवते प्रथमस्कन्धे तृतीयाध्याये व्यासदेवेन—( १ ) सनकाद्यवतारः, ( २ ) वाराहावतारः, ( ३ ) नारदावतारः, ( ४ ) नरनारायणावतारः, ( ५ ) कपिलावतारः, ( ६ ) दत्तात्रेयावतारः, ( ७ ) यज्ञावतारः, ( ८ ) ऋषभदेवावतारः, ( ९ ) पृथ्ववतारः, ( १० ) मत्स्यावतारः, ( ११ ) कूर्मावतारः, ( १२ ) धन्वन्तर्यवतारः, ( १३ ) मोहिन्यवतारः, ( १४ ) नृसिंहावतारः, ( १५ ) वामनावतारः, ( १६ ) परशुरामावतारः, ( १७ ) व्यासावतारः, ( १८ ) रामावतारः, ( १९ ) बलरामावतारः, ( २० ) श्रीकृष्णावतारः, ( २१ ) हर्यवतारः, ( २२ ) हंसावतारः, ( २३ ) बुद्धावतारः, ( २४ ) कल्क्यवतार इति चतुर्विंशत्यवतारान् निरूप्योक्तम्—

अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजाः !
यथाविदासिनः कुल्याः सरसः स्युः सहस्रशः ॥ ( १।३।२६ )
ऋषयो मनवो देवा मनुपुत्रा महौजसः।
कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः ॥ ( १।३।२७ )
एवं जन्मानि कर्माणि ह्यकर्तुरजनस्य च।
वर्णयन्ति स्म कवयो वेदगुह्यानि हृत्पतेः ॥ ( १।३।३५ )

अयं भावः—यथाऽगाधात् सरोवरात् सहस्रशः स्रोतांसि निःसरन्ति, तथैव सत्त्वगुणाश्रयाद्भगवतोऽप्यनन्ता अवतारा उद्भवन्ति। ऋषिषु मनौ मनुपुत्रेषु देवेषु प्रजापतिगणे च विभूतिरूपेण भगवत्कलाया विकासो जायते। अजन्मनोऽपीश्वरस्य जन्मादि कवयो वर्णयन्ति। पुनरेषु चतुर्विंशतिसंख्याकेष्ववतारेषु मत्स्यकूर्मवराहनृसिंहवामनपरशुरामरामबलरामबुद्धकल्क्यवताराः सन्ति प्रमुखाः। तदुक्तं वाराहपुराणे—

मत्स्यो कूर्मो वराहश्च नृसिंहो वामनस्तथा।
रामो रामश्च रामश्च बुद्धः कल्किर्दश स्मृताः॥
( ५२।२७ )

## अवतारतत्त्वस्य समीक्षा

दशानामेषामेवावतारसम्बन्धिनीनां लीलानां विशेषतो वर्णनं तत्तत्पुराणेषूपलभ्यते। एकं सद्विप्रा बहुधा वदन्तीति वचनानुसारं जगत्कारणस्य परमेश्वरैकत्वेऽपि पञ्चदेवोपासनासिद्धान्तानुसारं विष्णुशिवशक्तिसूर्यगणेशानामपि तत्तत्पुराणेष्ववतारस्य विवरणमुपलभ्यते।

यावदीश्वरस्य नियमे कापि बाधा नोपतिष्ठते, तावन्मानवपिण्डेषु नावतरति भगवान् विष्णुः। यदा तन्नियमेऽसामञ्जस्यमाविर्भवति, तदा पञ्चकलातोऽष्टकलापर्यन्तं स्वविभूतिद्वारा सामञ्जस्यं स्थापयति। परं यदा विभूतिद्वारापि कार्यं न प्रचलति, धर्मधारा चान्यवस्थिता बोभवीति, तदा तां व्यवस्थापयितुं कदाचिदंशेन कदाचिच्च सर्वाभिः कलाभिरवतरति स्वयं भगवान्नारायणः।

## अवतारभेदाः

पुराणेषु पञ्चविधा अवतारा उपलभ्यन्ते—१. पूर्णावतारः, २. अंशावतारः, ३. विशेषावतारः, ४. अविशेषावतारः, ५. नित्यावतारश्च। तत्र कलाभेदेननावतारो द्विविधः—पूर्णावतारोंऽशावतारश्च। ९ कलातः १५कलापर्यन्तमवतारोंऽशावतारः कथ्यते। तथा १६कलाभिरवतारः पूर्णावतारः प्रोच्यते। यथा परशुरामो द्वादशकलावतार आसीत्, किन्तु सीतास्वयंवरानन्तरं यदा तस्य कला रामे आकृष्टास्तदा स केवलं मुनिमात्रमवशिष्टः। तथा चोक्तं वाल्मीकीये रामायणे बालकाण्डे गोविन्दराजस्य टीकायाम्—

ततः परशुरामस्य देहान्निर्गत्य वैष्णवम्।<br>
पश्यतां सर्वदेवानां तेजो राममुपागमत्॥

(१।७६।११)

अंशावतारपूर्णावतारयोरिदमेवास्त्यन्तरम्। अंशावतारस्य कर्म एकदेशस्य, एककालस्य, एकस्याः परिस्थितेः, कदाचिदेकस्यापि कस्यचित् कृते हितकरं भवति। किन्तु पूर्णावतारस्य कर्म सम्पूर्णस्य देशस्य सकलस्य कालस्य सर्वासामेव परिस्थितीनां समेषां जीवानां च हिताय भवति। यथांऽशावतारस्य परशुरामस्य क्षत्रियसंहारात्मकं कर्म तदानीमावश्यकमासीत् किन्तु सर्वदा तदावश्यकं नासीत्। बुद्धसमये चेश्वरमुपेक्ष्य यज्ञविरोधं च विधाय अहिंसायाः प्रचारस्तदानीं परमावश्यक आसीत्, परन्त्वीश्वरस्य खण्डनं यज्ञस्य विरोधो वा न सर्वकालोपयोगी। किन्तु पूर्णावतारस्य लीलापुरुषोत्तमस्य भगवतः श्रीकृष्णस्य मर्यादापुरुषोत्तमस्य च रामस्यादर्शमयः कार्यकलापः सकलस्य कालस्य समस्तस्य देशस्य सर्वासामवस्थानां विश्वेषां जनानाञ्च कृतेऽत्यन्तमुपयोग्यनुकरणीय आश्रयणीयश्चास्ति।

एवं निमित्तभेदादपि द्वाववतारौ भवतः। एको विशेषावतारो द्वितीयश्चाविशेषावतारः। अत्र विशेषावतारो दीक्षासमये शिष्याणामन्तःकरणे गुरोर्भवति। अत एव गुरुर्ब्रह्मादिरूपेण पूज्यो मान्यश्च भवति—

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः॥

अविशेषावतारेषु कादाचित्को भगवद्भावस्यावेशो भवति, न तु सार्वकालिकः। यदा यत्र भगवद्भावस्यावेशो भवति तदा स भगवत्समो भवति, अन्यथा साधारणजन इव प्रतीयते। सनकादिनारदपृथुप्रभृतयो महापुरुषा अविशेषावतारा आसन्। तथा चोक्तः पद्मपुराणे आवेशभावः—

आविष्टोऽभूत् कुमारेषु नारदे च हरिर्विभुः।
आविवेश पृथुं देवः शङ्खी चक्री चतुर्भुजः॥
(२।२२।३५)

महाभारतस्य शान्तिपर्वणि शरशय्यायां स्थितेन भीष्मपितामहेन स्पष्टं प्रोक्तं यद् मयि द्रोणाचार्ये चासुराणामावेशो जात आसीदत आवां दुर्योधनस्य शुभचिन्तायां व्यापृतावास्ताम्।

मनुष्याणामन्तःकरणेषु नित्यावतारो भवति, यतः सर्वशक्तिमतः सर्वव्यापकस्य परमात्मनः सर्वत्र सत्त्वात् सर्वजीवानां हृदयेषु विराजमानः स पापकर्मतः प्राणिनो निवारयति पुण्यकर्मसु च प्रेरयति। येन पापकर्मभ्यः सदा संकोचो भवति, पुण्यकर्मसु च प्रवृत्तिर्जायते। अत एवोक्तम्—

जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न ततो निवृत्तिः।
केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि॥

एतदतिरिक्तो भक्तसमाजे भगवत एकोऽर्चावतारोऽपि प्रसिद्धः। भक्तद्वारा पूजार्थं मृत्पाषाणादिभिर्धातुभिर्निर्मिता मूर्तयो भगवतोऽर्चाविग्रहाः कथ्यन्ते। अर्चाविग्रहेषु भगवतः शक्तेरावेशस्य नामार्चावतारः। बहूनामेतादृशानां भक्तानां तत्तत्पुराणेषु चर्चा समुपलभ्यते, येषां हार्दिकेन प्रेम्णा, दृढया निष्ठया, अनन्यसेवया च भगवन्मूर्तयश्चेतना इव व्यवहरन्ति हसन्ति वदन्ति च।

प्रायः सर्वेषु पुराणेष्ववताराणां चर्चा समुपलभ्यते। श्रीमद्भागवते प्रथमस्कन्धे कुन्तीस्तुतौ दशमे गर्भगीतायां च भगवदवतारविषयेऽनेकानि कारणानि बहवो युक्तयश्च प्रदत्ताः सन्ति। भगवान् भक्तानामभिलाषेण विविधानि रूपाणि निर्माय तान् सन्तोषयति। श्रीमद्भागवतस्य

## अवतारतत्त्वस्य समीक्षा

दशमस्कन्धे एकः प्रसङ्ग एवमुपतिष्ठते यद् यदा भगवान् श्रीकृष्णो मिथिलायामुपस्थितस्तदा परमभक्तौ मैथिलश्रुतदेवावातिथ्येन तं सत्कर्तुं युगपदेव न्यमन्त्रयेताम्। अतस्तेनोभयोः प्रार्थनानुसारं युगपदेव रूपद्वयं विधाय द्वयोरेव गृहं गत्वोभावपि कृतार्थीकृतौ। रहस्यमेतत् केनापि न ज्ञातम्—

न्यमन्त्रयेतां दाशार्हमातिथ्येन सह द्विजौ।
मैथिलः श्रुतदेवश्च युगपत्संहताञ्जली॥
भगवांस्तदभिप्रेत्य द्वयोः प्रियचिकीर्षया।
उभयोराविशद्गेहमुभाभ्यां तदलक्षितः॥

(१०।८६।२५-२६)

ब्रह्मदेवस्य मोहप्रसङ्गे च वत्सानां गोपानाञ्च रूपाणि धृत्वा वर्षपर्यन्तं सर्वं कार्यं यथावदचालयद् भगवान् श्रीकृष्ण इति तु सर्वप्रसिद्धमेवास्ति। भगवतो रामस्यापि विषये वर्णनमुपलभ्यते यद् यदा स लङ्काविजयानन्तरं चतुर्दशवर्षावधिं समाप्य साकेतमुपेतस्तदा पुरवासिनो मेलितुमातुरान् अवलोक्यासंख्यानि रूपाणि विधाय सर्वैः सह युगपदेवामिलत्।

## दिव्यानि भगवतो जन्मानि कर्माणि च

भगवतो जन्मानि कर्माणि च दिव्यानि भवन्ति। भगवान् न जन्मकर्मभिः प्रेर्यते, नापि तच्छरीरं पाञ्चभौतिकं भवति, यतो हि स कालकर्मभ्यः परोऽस्ति। अतः कर्मणा तस्य स्पर्शोऽपि न भवति। भगवता श्रीकृष्णेन स्वयमेवोक्तं गीतायाम्—

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा।

(४।१४)

न कर्मवशीभूतो भगवान् जन्म गृह्णाति, किन्तु स्वेच्छया भक्तेष्वनुग्रहायैव शरीरधारणं करोति। यथा कारागृहे वन्दिनो राजानश्च गच्छन्ति। परमेके दण्डं भोक्तुमपरे च व्यवस्थां कर्तुं प्रविशन्ति। तथैव भगवान् जगद् व्यवस्थापयितुमेव मायामधीनीकृत्य स्वेच्छयावतरति। तस्य शरीरधारणकारणं न कर्म।

कारागृहे गच्छति भूमिपालो हेतुर्दया तत्र न कर्मबन्धः।
एवं स सर्वेश्वरदेवदेवो दयावतारो न च कर्मबन्धः॥

भगवतः शरीरं साधारणमनुष्यस्येव न पाञ्चभौतिकैरुपादानैरुत्पद्यते, किन्तु भगवद्विग्रहो दिव्यो भवति। यदा भगवान् श्रीकृष्णः कारागृहे वसुदेवदेवकीसमक्षे प्रादुर्बभूव, तदा स स्वलीलया शङ्खचक्रगदापद्मधारी चतुर्भुजरूपेणाविरभवत्। तदुक्तं श्रीमद्भागवते—

तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदार्युदायुधम्।
श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम्॥

महार्हवैदूर्यकिरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तलम्।
उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत॥

(१०।३।९-१०)

अग्रे पुनर्मातुः प्रार्थनया स्वं चतुर्भुजं रूपमदृश्यं विधाय साधारणो द्विभुजबालक इवाजायत—

इत्युक्त्वासीद्धरिस्तूष्णीं भगवानात्ममायया।
पित्रोः सम्पश्यतोः सद्यो बभूव प्राकृतः शिशुः॥

(१०।३।४७)

एवमेव भगवान् रामोऽपि कौसल्यायाः समक्षे चतुर्भुजरूपेणैव प्रादुरभवत्, पुनर्मातुः प्रार्थनया द्विभुजो जातः। किं लोके कश्चिद्बालक एवं रूप उत्पद्यते? अतो भगवतो जन्म दिव्यमित्यत्र न कापि विप्रतिपत्तिः। भगवतो वामनस्य नृसिंहस्य चालौकिकं रूपं निरीक्ष्य भगवज्जन्मनोऽलौकिकतैव व्यक्तीभवति। भगवतः श्रीकृष्णस्यान्तर्धानमपि मनुष्यशरीरवद् नाभवत्। श्रीमद्भागवते लिखितमस्ति यत् तस्य मङ्गलमयं शरीरं मनुष्यदेहवद् न विनष्टम्, किन्तु स्वकं धाम प्रविवेश—

लोकाभिरामं स्वतनुं धारणाध्यानमङ्गलम्।
योगधारणयाग्नेय्या दग्ध्वा धामाविशत् स्वकम्॥

(११।३१।६)

एवं वाल्मीकीयरामायणे उत्तरकाण्डे लिखितमस्ति यद् रामस्य परमधामगमनसमये यदा देवैः सह ब्रह्मा सरयूतटमुपेत्य वैष्णवे देहे प्रवेष्टुं प्रार्थयामास, तदा रामस्त्रिभिर्भ्रातृभिः साकं शरीरेणानेनैव वैष्णवं शरीरं प्रविवेश—

## अवतारतत्त्वस्य समीक्षा

पितामहवचः श्रुत्वा विनिश्चित्य महामतिः ।
विवेश वैष्णवं तेजः सशरीरः सहानुजः ॥ ( ११०।१२ )

वस्तुतो भगवतः शरीरं मायिकं न भवति, यतो हि मायाबन्धनात् स मायापतिः सर्वथा विमुक्तः । अत एवामलात्मनो महात्मनोऽपि भगवद्विग्रहं विलोक्य मुग्धा भवन्ति । शरशय्यायां शयानो भीष्मो यदा भगवतो वासुदेवस्य त्रिभुवनमोहनं रूपं व्यलोकयत्तदा प्रार्थयामास—

त्रिभुवनकमनीयं तमालवर्णं रविकरगौरवराम्बरं दधाने ।
वपुरलककुलावृताननाब्जं विजयसखे ! रतिरस्तु मेऽनवद्या ॥
( श्रीमद्भागवते, १।९।३३ )

यदा भगवान् रामो महर्षिणा विश्वामित्रेण सार्द्धं जनकपुरं धनुर्यज्ञप्रसङ्गेन गतवानासीत्, तदा तद्रूपमवलोक्य महाज्ञानिनोऽपि जनकस्य विचित्रैव दशाऽभवत् । स वस्तुतो विदेहो जातः । अतोऽवतारिणां शरीरं न मायिकं भवति, किन्तु तेषां जन्मानि कर्माणि शरीराणि च दिव्यान्येव भवन्ति । भक्तानां प्रार्थनानुसारमेव प्रेमवशीभूतो भगवान् समये समयेऽवतरति । अत एव गीतायामुक्तम्—

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ( ४।९ )

## विभूतिपूजा

अवतारवद्भगवद्विभूतयोऽप्याद्रियन्ते । भगवद्विभूतीनामपि सम्मानस्य पूजायाश्चाज्ञा शास्त्रेषु प्रदत्ताऽस्ति । यस्मिन् मनुष्ये भगवतः शक्तेर्विशेषतो विकासो दृश्यते तत्र तदालम्बनेन सर्वशक्तिमतो भगवतः पूजा विभूतिपूजा व्यवह्रियते । भगवता श्रीकृष्णेन गीतायां स्पष्टमुक्तम्—

यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ॥ ( १०।४१ )

वृक्षेषु पिप्पलपूजा, उद्भिज्जेषु तुलसीपूजा, पशुषु गोपूजा, मनुष्येषु गुरोराचार्यस्य राज्ञोऽतिथेर्महापुरुषाणाञ्च पूजा विभूतिपूजैव निगद्यते । अवतारपूजा विभूतिसम्मानञ्च हिन्दुधर्मस्य प्रमुखमङ्गमस्ति ।

कस्याञ्चिद्विभूतौ द्वयोस्त्रयाणां वा देवानां कलाया आवेशो भवति । यथा भगवति हनुमति रुद्रस्य वायोश्च कले कार्यं कुरुतः । कुत्रचिच्च देवानां महर्षीणाञ्च कलास्तिष्ठन्ति, यथा भगवति व्यासे भगवतो विष्णोर्महर्षीणाञ्च कला आसन् । एवं भगवति कपिलेऽपि । अत एव स मुनिरवतारी चासीत् ।

प्रायः सर्वेषु पुराणेष्ववताराणां प्रसङ्गः समागतो विद्यते । शैवमतपोषकपुराणेषु भगवतः शिवस्यानेकेषामवताराणां चर्चाऽस्ति । वैष्णवसिद्धान्तपोषकेषु पुराणेषु भगवतो विष्णोर्विभिन्नानामवताराणामुल्लेखोऽस्ति । शाक्तमतपोषकपुराणेषु भगवत्याः शक्तेः साधका विविधा अवताराः

श्रूयन्ते । सूर्योपासनासम्बन्धिषु पुराणेषु सूर्यदेवस्यावतारवर्णनमस्ति । गणेशपुराणे भगवतो गणपतेरनेकावतारकथा दरीदृश्यन्ते ।

सृष्टिकार्योपयोगिनो यस्य यस्यावतारस्य नाम्ना यद्यत्पुराणं निर्मितमस्ति तत्र तत्र तस्य तस्यावतारस्य विशेषवर्णनं वर्तते, तद्द्वारा च कस्मैचिद् व्यक्तिविशेषाय कश्चनामूल्योपदेशोऽवश्यं दत्त उपलभ्यते । यथा मत्स्यपुराणे श्रीमत्स्यद्वारा वैवस्वताय मनवे, कूर्मपुराणे कूर्मद्वारा देवताभ्यः, वाराहपुराणे वराहद्वारा पृथिव्यै, नृसिंहपुराणे नृसिंहद्वारा भक्तराजाय प्रह्लादाय, वामनपुराणे च वामनद्वारा दानवीराय बलयेऽमूल्य उपदेशो दत्तो विद्यते । सर्वेषु पुराणेष्ववतारचर्चाया इदमेव मुख्यं कारणमस्ति यन्मनुष्या अवताराणां निर्मलमादर्शमयमुपदेशप्रदमनुकरणीयं च चरित्रं समाकर्ण्यालौकिकं महिमानं चावगत्य स्वान्तःकरणेषु भक्तिवैराग्यज्ञानादिद्वारा मानवजन्मधारणस्य प्रमुखं लक्ष्यं भगवत्प्राप्तिरूपं प्राप्तुं समर्था अवश्यं भवेयुः । पुराणेष्वेकमत्या स्वीकृतमस्ति यद् धर्मसंस्थापनद्वारा जगतो रक्षायै यथासमयं स्वयं सर्वशक्तिमान् परमात्मा देवैः श्लाघ्ये पवित्रतमेऽत्र भारतवर्षेऽवतरति ।

## अवतारशब्दार्थः

जगति नैवंविधं किञ्चित् स्थानमस्ति यत्र सर्वव्यापकस्य सर्वान्तर्यामिणो निराकारस्य परमात्मनः सत्ता न स्यात् । अतोऽवतारशब्दस्य नायमर्थोऽस्ति यत्परमात्मा कुतोऽप्यागच्छति स्वर्गाद्वावतरति, किन्त्ववतारशब्दस्य वास्तविकोऽयमर्थो वर्तते यदव्यक्तरूपेण सर्वत्र विराजमानस्य परमात्मनो व्यक्तरूपेण प्रादुर्भावः । "ईशावास्यमिदं सर्वं यत्किञ्चिज्जगत्यां जगत्" ( य० वे० ४०।१ ) इति मन्त्रानुसारमिह जगति यत्किञ्चिद् विद्यते तत्सर्वं परमात्मनः स्वरूपमेवास्ति । तथा च भगवान् विष्णुर्यदा जगद्रक्षाभिप्रायेण स्वचिन्मयकलायाः शक्तिं कस्यचन जीवस्याश्रयेण विशेषतो विकासयति, तदा सैव लीलाविग्रहरूपा तस्य सर्वप्रत्यक्षावस्थाऽवतारशब्दाभिधेया भवति । अतो व्यक्तत्वेऽपि परमात्माऽव्यक्तोऽस्ति, प्राकट्येऽपि रहस्यमयोऽस्ति । अत एव भगवतः स्वरूपं वास्तविकं दुर्बोधं मत्वा श्रीमद्भागवतस्याद्यं पद्यमुदाजहार भगवान् व्यासः—

> जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
>
> तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ।
>
> तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा
>
> धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ( १।१।१ )

न केवलं पुराणेष्वेव, किन्तु वेदे ब्राह्मणे आरण्यके उपनिषदि रामायणे महाभारते चाप्यवताराणां पुष्कलः प्रसङ्ग उपलभ्यते, किन्तु निबन्धस्यास्य कलेवरवृद्धिभिया इहैव विरमामि ।

वैदिकग्रन्थेषु येषामवताराणामाभासो मिलति तेषामेव पुराणेषु सुरुचिपूर्णया प्राञ्जलभाषया आख्यानोपाख्यानादिभिर्विस्तार उपलभ्यते । तस्मात् पुराणप्रतिपादिता अवतारा वेदमूलका एव सन्तीति न कापि विप्रतिपत्तिर्भवितुमर्हति केषाञ्चिदपि विपश्चितामित्यलं पल्लवितेन ॥



# सन्ध्याविमर्शः

श्री के० पी० नारायणशास्त्री, सरस्वतीभवनम्, वा० सं० वि० वि०।

( पूर्वाङ्कतोऽनुवृत्तिः )

अथापः पुनन्त्विति मन्त्रार्थं उच्यते—मन्त्रपूता आपः पृथिवीं शुद्धां कुर्वन्तु, पृथिवीशब्देन पार्थिवभागाधिक्यात् स्थूलशरीरमुच्यते। स्थूलशरीरं पूतं सद् लिङ्गशरीरोपाधिकं मां तद्गतरागद्वेषादिमलनिरासेन शुद्धं करोतु। ब्रह्मणः=चतुर्मुखस्य, पतिः=स्वामी, परमात्मा मां पुनातु। बहुवचनं छान्दसं पुनन्त्विति। अविद्यामलनिरासेन मां शुद्धं करोत्विति प्रार्थना। ब्रह्मपूता पुनातु मां परमात्माख्येन ब्रह्मणा पूता आपो मां पुनन्तु। एकवचनमत्र छान्दसम्। पापनिरासेन मां शुद्धं कुर्वन्त्विति भावः। निरसनीयपापान्याह—"यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम। सर्वं पुनन्तु मामापोऽसताञ्च प्रतिग्रहं स्वाहा" इति। पुरुषान्तरोच्छिष्टं पतिताद्यन्नमभोज्यमित्युच्यते। यच्च परदारगमनादिदुश्चरितं मया कृतं सर्वं पुनन्तु मामापः। असतां च प्रतिग्रहम् असज्जनेभ्यश्च द्रव्यप्रतिग्रहनिमित्तं यत्पापं कृतं तत्सर्वं ब्रह्मपूता आपो नाशयित्वा मां पुनन्तु। तथा च निरस्तसमस्तपापवृन्दोऽहं शुद्धान्तःकरणः सन् ब्रह्मसाक्षात्कारद्वारा सच्चिदानन्दब्रह्मात्मनावस्थितिरूपजीवन्मुक्तिस्थितिमनुभवितुं योग्यो भवामीत्यर्थः। अग्निश्चेति मन्त्रार्थः सूर्यश्चेतिवत्। अभितो गमनादग्निः सर्वव्यापकः परमात्मा। अह्नेति तृतीयान्तः सप्तम्यर्थे। 'अहस्तदवलुम्पतु' इत्यत्राहःशब्दः परमात्मबोधकः। सर्वपापनिवारकत्वलिङ्गात् सत्ये ज्योतिषीत्यत्र सत्यशब्दश्च तथैव, त्रिकालाबाध्यत्वरूपसत्यत्वस्य ब्रह्मणोऽन्यत्राभावात्। अन्यत्सर्वं पूर्ववत्।

"दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभिनो मुखाकरवत् प्रण आयूंषि तारिषत्॥" इत्यस्यार्थः—जगन्ति दधत् क्रावयति व्याप्नोतीति दधिक्रावा परमात्मेत्यर्थः। तस्य परमात्मनः स्तुतिं तन्माहात्म्यप्रतिपादकोपनिषद्भिरकार्षं कृतवानस्मि, कीदृशस्य ? मार्कण्डेयादिभक्तजनरक्षणार्थमिन्द्रादिदेवगणरक्षार्थं वा स्वेच्छया गृहीतलीलाविग्रहेण मुरत्रिपुरादिसंग्रामे जिष्णोर्जयशीलस्याश्वस्य सर्वलोकव्यापिनः। वाजिनः=वेगवतः। तादृशपरमात्मनः स्तुतिमकार्षमिति सम्बन्धः। स परमात्मा नो मुखं सुरभि=सौरभ्ययुक्तम्, करत्=करोतु। तत्त्वमस्यादिमहावाक्योत्थात्मतत्त्वविद्यया सन्तुष्टं कृतार्थं करोत्विति यावत्। मुखशब्देन वागिन्द्रियं सुरभि-

शब्देन शुद्धिश्च लक्ष्यते । तथा चास्माकं वाचं शुद्धां करोत्वित्यर्थः । इति वा मनसश्चोपलक्षण-मेतत् । तथा च विशुद्धवाङ्मनसस्य स्तुतिकरणयोग्यता सम्भवति, नः=अस्माकमायूंषि प्रतारि-षत्=प्रकृष्टानि निरुपद्रवाणि कुर्यात्, आयुषोऽभावे व्याध्यादिभिरुपद्रवे वा स्तुतेरनिर्वाहात् स्तोत्रोपयुक्तायुःप्रार्थनेऽपि न मुमुक्षुत्वहानिः । अनेन मन्त्रेण हृदयदेशे मार्जनमित्याचारनव-नीतकाराः प्राहुः ।

प्रोक्षणानन्तरं प्रणवसहितव्याहृतीभिरात्मानं परिषिच्य "ऋतञ्च सत्यञ्चाभीद्धात् तपसोऽध्यजायत, ततो रात्रिरजायत, ततः समुद्रोऽर्णवः, समुद्रादर्णवादधि संवत्सरोऽजायत, अहोरात्राणि विद-धद् विश्वस्य मिषतो वशी । सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवञ्च पृथिवीञ्चान्तरिक्षमथो सुवः ॥" इति मन्त्रेण हस्तेऽभिमन्त्रितं जलमाघ्राय भूमौ क्षिपेत् । तदुक्तं प्रजापतिना—"जलपूर्णं तथा हस्तं नासिकाग्रे समर्पयेत् । ऋतञ्चेति पठित्वा तु तज्जलं तु क्षितौ क्षिपेत् ॥" इति, ततः सूर्या-यार्घ्यं निवेदयेत् । तदाह व्यासः—

> कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम् ।
> आदित्याभिमुखस्तिष्ठन् त्रिरूर्ध्वमथ चोत्क्षिपेत् ॥ इति ।
> व्याहृत्या सह गायत्र्या सन्ध्यां प्रत्यञ्जलिं क्षिपेत् । इति शौनकः ।

हारीतस्मृतौ पुष्पमिश्रितमञ्जलिमिति विशेषणमप्युक्तम् ।

> सूर्यायैव तु गायत्र्या त्रिसन्ध्यास्वञ्जलिं क्षिपेत् ।
> प्रातर्मध्याह्नयोस्तिष्ठन् सायमासीन एव वा ॥
> मन्देहानां वधार्थाय प्रक्षिपेदुदकाञ्जलिम् ।
> प्रायश्चित्तार्थमाचम्य मुच्यते दैत्यहत्यया ॥
> प्रणवव्याहृतीभिश्च कृत्वात्मानं प्रदक्षिणम् ।
> आचम्यैव ततस्तिष्ठन् ध्यायेत् सन्ध्यां समाहितः ॥ इति शङ्खः ।

पारिजातकारोऽर्घ्यदानवेलायां स्थितिविशेषमाह—

> ईषन्नम्रः प्रभाते तु मध्याह्ने तु ऋजुस्तथा ।
> गायत्र्या प्रक्षिपेदर्घ्यं सायं तूपविशन् भुवि ॥
> गोशृङ्गमात्रमुद्धृत्य रविं दृष्ट्वा जलाञ्जलिं ।
> द्वौ पादौ तु समौ कृत्वा पार्ष्णी उद्धृत्य निक्षिपेत् ॥ इति ।

द्वौ हस्तौ युग्मतः कृत्वा पूरयेदुदकाञ्जलिम् ।
गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥
जलेऽन्त्वर्घ्यं प्रदातव्यं जलाभावे शुचिस्थलम् ।
संप्रोक्ष्य वारिणा सम्यक् ततोऽर्घ्याणि प्रदापयेत् ॥
मुक्तहस्तेन दातव्यं मुद्रां तत्र न कारयेत् ।
तर्जन्यङ्गुष्ठसंयोगो राक्षसी मुद्रिका स्मृता ॥
राक्षसीमुद्रया दत्तं तत्तोयं रुधिरं भवेत् ।

इति संग्रहे तर्जन्यङ्गुष्ठसंयोगरूपराक्षसमुद्रयाऽर्घ्यदाने तस्य रुधिरप्रायतया तादृशमुद्रा-निषेध उक्तः । जलाभाव इति वचनं गृहे सन्ध्योपास्तिविषयम्—

ततः प्रदक्षिणीकृत्य त्वद्भिः संप्रोक्षिते शुचौ ।
देशे च दर्भसंक्लृप्ते वाग्यतः प्राङ्मुखः स्थितः ॥
दर्भान् धारयमाणः सन्नात्मनो ध्यानमाचरेत् ।
उपविश्य द्विराचम्य ग्रहादींस्तर्पयेत्ततः ॥ इति भारद्वाजः ।

देवलः सायङ्काले वाजसनेयिनां स्थलेऽर्घ्यदानं विदधाति—

सायङ्काले प्रकुर्वन्ति ह्यर्घ्यप्रक्षेपणं द्विजाः ।
जलमध्ये त्वञ्जलिना विना वाजसनेयिनः ॥ इति ।

बह्वृचास्तु—

प्रातर्मध्याह्नयोरप्सु सायङ्काले भुवि क्षिपेत् ।
तिष्ठन्नर्घ्यत्रयं कुर्यात् त्रिषु कालेषु बह्वृचः ॥

इत्याचारनवनीतोक्तप्रकारेणानुतिष्ठेयुः । जलाभावे कर्तव्यमाह विष्णुः—

जलाभावे महामार्गे बन्धने त्वशुचावपि ।
उभयोः सन्ध्ययोः काले रजसा वार्घ्यमुत्क्षिपेत् ॥
तदभावेऽपि सूर्यस्य ध्यानमेव समाचरेत् । इति ।
दर्भहीना तु या सन्ध्या यच्च दानं विनोदकम् ।
असंख्यातं तु यज्जप्तं तत्सर्वं स्यान्निरर्थकम् ॥

इत्यसंख्यातजपस्य नैरर्थक्योक्त्या गणनाऽत्यावश्यकीत्युक्तं शातातपेन ।

सन्ध्यातिक्रमणे यस्य सप्तरात्रं गमिष्यति ।
उन्मत्तदोषयुक्तोऽपि पुनः संस्कारमर्हति ॥

इति तु सर्वात्मना सन्ध्यानुष्ठानाकरणविषयम् । यथाकथञ्चिद् गौणकालेऽपि भावनया वाप्यकरणे पूर्वोक्तप्रायश्चित्तं वेदितव्यम् ।

वेदसारं परं ज्योतिः मूलभूतं परात्परम् ।
हृदिस्थं सर्वभूतानां मण्डलान्तर्व्यवस्थितम् ॥
वज्रायुधसहस्रस्य सकृत् सन्धानकारणम् ।
चिन्तयन् परमात्मानमप ऊर्ध्वं विनिक्षिपेत् ॥

इत्युक्तरीत्या आदित्यमण्डलान्तर्वर्तिसकलप्राणिहृदयपुण्डरीकावस्थितञ्च यत्परं ज्योतिः सकलोपनिषत्प्रसिद्धं तदेवाहमित्यभेदानुसन्धानपूर्वकमर्घ्यं प्रदद्यात् । तथा च तैत्तिरीयका आमनन्ति—"स यश्चायं पुरुषे यश्चासावादित्ये स एक इत्यादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते" इति । ततो दैत्यहत्यादोषपरिहाराय द्विराचम्य प्राणायामञ्च कृत्वा मुख्यकालातिक्रमप्रायश्चित्तार्घ्यमेकं दत्वा सजलेन पाणिना सप्रणवव्याहृतिभिरात्मानं परिषिच्य सकृत्प्रदक्षिणं कृत्वा प्राणायामपूर्वकं सन्ध्यारूपमादित्याख्यं परमात्मानमनुध्यायेत् ।

कालभेदेनानुध्यानप्रकार उच्यते—तत्र प्रातःकाले गायत्रीनाम रक्तवर्णब्रह्माभिन्नसन्ध्यारूपमादित्यं परमात्माभिन्नं ध्यायेत्, मध्याह्नकाले सावित्रीनाम शुक्लवर्णरुद्ररूपसन्ध्यात्मकमादित्यम्, सायंकाले सरस्वतीनाम कृष्णवर्णविष्णुरूपसन्ध्यात्मकमादित्यम् । कालत्रयेऽपि पुनः समष्टिरूपेण तमादित्यं परब्रह्माभिन्नं सच्चिदानन्दानन्तसर्वान्तर्याम्यखण्डैकरसाद्वितीयं परं ब्रह्माहमस्मीति तत्त्वं पदलक्ष्यार्थयोः शुद्धजीवात्मपरमात्मनोरैक्यरूपेण सन्ध्योपासनं कार्यम् । इदमेव मुख्यं सन्ध्योपासनपदवाच्यमिति रहस्यनामसाहस्रभाष्ये तत्रभवता भास्कररायमहाशयेनाप्युक्तम्—गायत्रीनामकसन्ध्यां प्रकृत्य साऽहमस्मीत्युपासीतेति । भगवान् याज्ञवल्क्योऽपि प्राह । तथा तैत्तिरीयारण्यकेऽपि "उद्यन्तमस्तं यन्तमादित्यमभिध्यायन्" इत्युपक्रम्य "असावादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद" इति । "एकमर्घ्यं प्रदातव्यं मध्याह्ने भास्करं प्रति" इति वचनाद् मध्याह्नेऽर्घ्यद्वयप्रदाने प्रमाणं मृग्यम् ।

एकं वाहननाशाय द्वितीयं शस्त्रनाशकम् ।
असुराणां वधायैकं तस्मादर्घ्यत्रयं त्यजेत् ॥

इति वचनं तु सायंप्रातरर्घ्यत्रयदानस्यात्र वचनमात्रमिति ज्ञेयम् । अत्र वसिष्ठविश्वामित्र-कल्पादौ ब्रह्मास्त्रोपसंहारादि बहुविस्तृतमभिहितं तत्तत एव ग्राह्यम् । विस्तरभयान्नेह लेखनीं व्यापारयामः । तथा मुद्राविषयविस्तरोऽपि ।

## अथ जपप्रकरणम्

तत्र याज्ञवल्क्यो जपदेशमाह—

अग्न्यगारे जलान्ते वा जपेद्देवालयेऽपि वा ।
पुण्यतीर्थे गवां गोष्ठे सिद्धक्षेत्रेऽथवा गृहे ॥ इति ।

अत्राग्न्यगारे इत्याहिताग्निविषयम्, जलान्तं जलतीरं पुण्यपुरुषैरर्हत्तमैः सेवितं पुण्यतीर्थम्, सिद्धक्षेत्रं बदरीनैमिषारण्यगोकर्णगायत्रीशिलादिसिद्धिस्थानानि, गृहे इत्यातुरविषयम् ।

सूर्याग्निरुद्रदेवानां गुरूणामपि सन्निधौ ।
अन्येषामपि देवानां मन्त्रानभिमुखो जपेत् ॥
अश्वत्थबिल्वतुलसीवनपुष्पान्तरावृतः ।

इत्यादिस्थानविशेषा अप्युक्ताः ।

गृहे त्वेकगुणं प्रोक्तं नद्यादौ द्विगुणं स्मृतम् ।
गवां गोष्ठे दशगुणमग्न्यगारे शताधिकम् ॥
सिद्धक्षेत्रेषु तीर्थेषु देवतायाश्च सन्निधौ ।
सहस्रं शतकोटीनामनन्तं विष्णुसन्निधौ ॥ इति शङ्खः ।

स्थानभेदेन फलातिशयमाह । भगवानङ्गिरास्तु गुप्तजपस्य फलातिशयं ब्रूते—

प्रच्छन्नानि च दानानि ज्ञानञ्च निरहङ्कृतम् ।
जप्यानि च सुगुप्तानि तेषां फलमनन्तकम् ॥ इति ।

तथा सुखकरासने उपविश्य प्राणायामपूर्वकं जपं कुर्यात्, "आदावन्ते च गायत्र्याः प्राणायामत्रयं चरेत्" इत्युक्तेः ।

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिःपठेदायतप्राणः प्राणायामः स उच्यते ॥ इति मनुः ।
ओङ्कारपूर्विकाः सप्त जपेत्तु व्याहृतीस्तथा ।
शिरसा सह गायत्रीं प्राणायामः परन्तपः ॥ इति यमश्च ।

"वामहस्तेन गणयन् प्राणायामं चरेद् द्विजः" इति कर्मप्रदीपकारोक्तेर्गणनमप्यावश्यकम् । ओङ्कारपूर्वकव्याहृतिसप्तकजपेन च भूरादिसप्तलोकस्य सर्वात्मकब्रह्मरूपत्वेनोपासनात्तेषु लोकेषु कामचारादिफलविशेषश्चाम्नायते ।

य एता व्याहृतीः सप्त संस्मरेत् प्राणसंयमे ।
उपासितं भवेत्तेन विश्वं भुवनसप्तकम् ॥
सर्वेषु चोर्ध्वलोकेषु कामचारश्च जायते । इति ।

प्राणायामानन्तरं गायत्र्यावाहनमुच्यते ।

आयात्वित्यनुवाकेन हृदये वार्कमण्डले ।
देवीमावाह्य गायत्रीं ततो ध्यायेद् द्विजोत्तमः ॥
आवाहयेत्तु गायत्रीं सर्वपापप्रणाशिनीम् ।
आगच्छ वरदे देवि ! जप्तुर्मे सन्निधौ भव ॥
गायन्तं त्रायसे यन्मां गायत्री त्वं ततः स्मृता । इति व्यासः ।

स्मृतिभास्करे गायत्र्यर्थो यथा—

तदित्येतत्परं ब्रह्म ध्येयं तत्सूर्यमण्डले ।
सवितुः सकलोत्पत्तिस्थितिसंहारकारिणः ॥
वरेण्यमाश्रयणीयं यदाधारमिदं जगत् ।
भर्गः स्वसाक्षात्कारेणाविद्याकार्यप्रदाहकम् ॥
देवस्य ज्ञानरूपस्य स्वानन्दात् क्रीडतोऽपि वा ।
धीमह्यहं स एवेति तेनैवाभेदसिद्धये ॥
धियोऽन्तःकरणवृत्तीः प्रत्यक् प्रवणकारिणीः ।
य इत्यरूपमव्यक्तं सत्यज्ञानादिलक्षणम् ॥
नोऽस्माकं बहुधाऽध्यस्तभेदेनानेन देहिनाम् ।
प्रचोदयात् प्रेरयति सत्यज्ञानादिलक्षणम् ॥ इति ।

यद् ब्रह्म नित्यं हृदि सन्निविष्टं मां प्रेरयत्तिष्ठति नः सुबुद्धीः ।
भर्गस्तदाख्यं भजनीयमेतद् ध्यायामि नित्यं रविमण्डलस्थम् ॥

इति निरुक्तभाष्योक्तार्थः ।

मैत्रायणीयानामुपनिषदि गायत्र्यर्थ उच्यते—

"अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इत्युपक्रम्य "स एषोऽन्तरे हृत्पुष्कर एवाश्रितोऽन्नमत्ति" इति। यथा तैत्तिरीये—"स यश्चायं पुरुषे, यश्चासावादित्ये स एकः" इत्युक्तम्। एवमेवादित्यमण्डलान्तर्वर्तिन एवाखिलप्राणिहृत्पुण्डरीकवर्तितामुक्त्वा "एतावुपासीत, ओमित्येतदक्षरेण व्याहृतिभिः सावित्र्या च" इति प्रणवव्याहृतिसहितगायत्र्या तदुपासनमपि विहितम्, अनन्तरञ्च प्रणवस्य व्याहृतीनाञ्च महिमानमुपव्याख्याय, प्रजापतेः स्थविष्ठां तनूं लोकवतीमुपन्यस्य, "स्वरित्यस्याः शिरः, नाभिर्भुवः, भूः पादौ, आदित्यश्चक्षुः" इति व्याहृतिशरीरस्य प्रजापतेश्चक्षूरूपतामादित्यस्योपवर्ण्य, "सत्यं वै चक्षुः", "अक्षण्यवस्थितो हि पुरुषः सर्वार्थेषु चरति" इति प्रजापतेश्चक्षुष्ट्वेनादित्यं महीकृत्य चक्षुर्दृष्टस्य सत्यत्वप्रसिद्धेरादित्यः सत्यमिति सत्यात्मकत्वमादित्यस्याप्युक्तम्। तथा च सत्यात्मा प्रजापतिरेवादित्य इति प्रजापतितादात्म्यमुक्त्वा, "एतस्माद् भूर्भुवः सुवरित्युपासीत। अनेन हि प्रजापतिर्विश्वात्मा विश्वचक्षुरेवोपासितो भवति। एषा वै प्रजापतेर्विश्वभृत्तनूस्तस्मादेषोपासीत" इत्यन्तग्रन्थेन व्याहृत्युपासनं व्याख्याय सावित्र्या उपासनं व्याख्यातुमुपक्रमते—"तत्सवितुर्वरेण्यमिति, असौ वादित्यः सविता स वैवं प्रवरणीय आत्मकामेनेत्याहुर्ब्रह्मवादिनः। अथ भर्गो देवस्य धीमहीति सविता वै भर्गो देवस्ततो योऽस्य भर्गाख्यस्तं चिन्तयामीत्याहुर्ब्रह्मवादिनः। अथ धियो यो नः प्रचोदयादिति बुद्धयो वै धियस्ता योऽस्माकं प्रचोदयादित्याहुर्ब्रह्मवादिनः" इति। अत्रेत्थं पदयोजना—यो देवः सविता तस्य सवितुर्देवस्य वरेण्यं भर्गाख्यं वयं धीमहि, स नो धियः प्रचोदयादिति।

पुनरपि भर्गशब्दं व्याख्यातुमुपक्रमते—"अथ भर्ग इति यो वाऽमुष्मिन्नादित्ये निहितस्तारकोऽक्षणि वैष भर्गाख्यः" इति। अधिदैवतमादित्येऽध्यात्मं चक्षुषि चाधिष्ठाता परमेश्वरो भर्ग इति यावत्। पुनरपि भर्गशब्दं निर्वक्ति—"भाभिर्गतिरस्य हीति, भर्जयतीति वैष भर्ग इत्याहुर्ब्रह्मवादिनः" इति। बहुजन्मसञ्चितानेकविधमहापापराशिदाहकत्वं द्वितीयनिर्वचनेनोक्त्वा पुनरपि प्रकारान्तरेण भर्गशब्दं निर्वक्ति—"अथ भ इति भासयतीमान् लोकान् र इति रञ्जयतीमानि भूतानि ग इति गच्छन्त्यस्मिन् आगच्छन्त्यस्मादिमाः प्रजाः। तस्माद् भरगत्वाद् भर्गः" इत्यवयवनिरुक्त्या भर्गाख्यां महीकरोति। पुनरपि "शश्वत् सूयमानत्वात् सूर्यः सवनात् सविता आदानादादित्यः" इत्यादिना सूर्यादिनामनिर्वचनमुक्त्वा "आत्मा विभुर्विग्रहे सन्निविष्टः" इति सकलप्राणिशरीरान्तरात्मत्वमस्य वदति। अन्यत्र च—"स एष इह प्रविष्ट आनखाग्रेभ्यः, अनेन जीवेनात्मनानु-

प्रविश्य, तत्सृष्ट्वा तदेवानुप्राविशत् , आविःसन्निहितं गुहाचरन्नाम, गुहां प्रविष्टौ परमे परार्ध्ये, सर्वस्य चाहं हृदि सन्निविष्टः, क्षेत्रज्ञं चापि मां विद्धि, एको देवः सर्वभूतेषु गूढः ।

ईश्वरो जीवकलया प्राणिनां देहमाश्रितः ।,
अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।।"

इत्यादिश्रुतिस्मृतिवाक्यसहस्रमत्र प्रमाणं द्रष्टव्यम् । एवमस्यां मैत्रायणीयोपनिषदि गायत्रीप्रतिपाद्यं परं ब्रह्म नित्यमुपासनीयमिति मनसि कृत्वैव—

गायत्रीमात्रनिष्ठोऽपि द्विजो भवति निर्भयः ।
परिहाप्यापि वेदांस्त्रीन् गायत्रीं समुपाश्रयेत् ।।
गायत्रीं चैव वेदांश्च तुलयाऽतोलयत् प्रभुः ।
एकतश्चतुरो वेदान् साङ्गांश्च सपदक्रमान् ।।
एकतश्चैव गायत्रीं तुल्यरूपा तु साभवत् ।
गायत्र्या न परं जप्यं गायत्र्या न परं तपः ।।
गायत्र्या न परं ध्येयं गायत्र्या न परं हुतम् ।

इति ब्रह्मादिवचनम् । विश्वामित्रोऽपि—

गायत्र्यास्तु समो नास्ति मन्त्रो वेदचतुष्टये ।
सर्वे वेदाश्च यज्ञाश्च दानानि च तपांसि च ।।
समानि कलयाप्याहुर्मुनयो न तदित्यृचः । इति ।
चतुर्णामपि वेदानां गायत्री जननी भवेत् ।
तामुपास्ते तु यो नित्यं स विप्रः पङ्क्तिपावनः ।।

इति योगियाज्ञवल्क्यः ।

सर्वेषामेव पापानां सङ्करे समुपस्थिते ।
दशसाहस्रमभ्यस्ता गायत्री शोधयेत्ततः ।। इति मार्कण्डेयः ।

प्रणवो व्याहृतयस्तिस्रः सावित्री चैते पञ्चब्रह्मयज्ञाः, "अहरहः किल्बिषात् पावयन्ते" इति भगवान् बोधायनः, "गायत्रीमात्रसारोऽपि वरो विप्रः सुयन्त्रितः" इति संवर्तश्च ।

इत्यादि परस्सहस्रं स्मृतिवाक्यानि गायत्रीं महयन्ति। देवीभागवते द्वादशस्कन्धे भगवान् गौतमो दुर्भिक्षपीडितविप्रकुलकुटुम्बसहस्रं दिव्यभोगैर्द्वादशवर्षसहस्रं गायत्रीकृपया पोषयामासेत्युपाख्यायते, सुमन्दहासविकसन्मुखकमला सा परदेवता गौतमाश्रमेऽद्यापि प्रत्यक्षमुपलभ्यत इति च विस्तरभयान्नेह प्रतायते।

जपारम्भे प्राणायामात् प्राग्भूतशुद्धिः प्राणप्रतिष्ठा मातृकान्यास इत्येते कासुचित् स्मृतिषूक्ताः। गायत्रीवर्णानामपि पृथगेकैकश ऋषिवर्णादयस्तेषामनुष्ठाने फलातिशयः। भारद्वाजस्तु षडङ्गन्यासानन्तरं जपं विदधाति—

एवं विन्यस्य गायत्रीमावाह्य च यथाविधि।
ध्यात्वोपचारं सकलं कृत्वाऽथ जपमाचरेत्॥ इति।
पञ्चावसाना गायत्री जप्येति मनुरब्रवीत्।
पञ्चावसानां गायत्रीं जपेन्नित्यमतन्द्रितः॥

इति जपे पञ्चावसानत्वमभिहितम्। तद्यथा—आदौ प्रणवे, ततो व्याहृत्यन्ते गायत्र्याः पादत्रये चेति। "एतदक्षरमेताञ्च जपेद् व्याहृतिपूर्विकाम्" इति मानववचनानुसाराद् व्याहृतिपूर्वकत्वं गायत्र्याः प्रतीयमानं केषाञ्चिद् गायत्र्यादौ प्रणवोच्चारणं वारयति—

प्रणवव्याहृतियुतां गायत्रीं तु ततो जपेत्।
समाहितमनास्तूष्णीं मनसापि विचिन्तयेत्॥
प्रणवं व्याहृतीस्तिस्रो गायत्रीञ्च जपेत् क्रमात्।

इत्यादिक्रमप्रतिपादकवचनान्यप्येवमेव सामञ्जस्यमश्नुवते। पितामहो होमे विशेषमाह—

प्रणवव्याहृतीयुक्ता स्वाहान्ता होमकर्मणि।
शुद्धा वात्र प्रयोक्तव्या प्रणवव्याहृती विना॥ इति।

स्मृतिसारसमुच्चये तु—"सम्पुटैकषडोङ्कारा गायत्री त्रिविधा मता" इति त्रैविध्यमुक्त्वा—

तत्रैकप्रणवा ग्राह्या गृहस्थैर्जपकर्मणि।
गृहस्थवत्तु जप्तव्या सदैव ब्रह्मचारिभिः॥
सम्पुटा च षडोङ्कारा भवेतामूर्ध्वरेतसाम्।

इति गृहस्थादिजपव्यवस्था कृता—

गृहस्थो ब्रह्मचारी च प्रणवाद्यामिमां जपेत्।
अन्ते यः प्रणवं कुर्यान्नासौ वृद्धिमवाप्नुयात्॥ इति।

अन्ते प्रणवोच्चारणस्य प्रत्यवायापादकतामावेदयति पूर्वं सन्ध्योपास्तिप्रमाणतयोपन्यस्त-छन्दोगश्रुतौ—"कस्माद् ब्राह्मणः सायमासीनः सन्ध्यामुपास्ते कस्मात् प्रातस्तिष्ठन्" इति प्रश्नद्वये "यत्सायमासीन उपास्ते तेन वीरस्थानं जयति" इति वचनेनैकस्योत्तरमभिहितं न तु द्वितीयस्य।

पूर्वां सन्ध्यां जपेत्तिष्ठन् नैशमेनो व्यपोहति।
पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम्॥

इति मनुवचनोक्तविशेषांशस्तत्र ग्राह्यः। तथा "मध्यमसन्ध्यायामासीनः प्राङ्मुखो जपेत्" इति माधवीयवचने मध्यसन्ध्यायामासीनत्वमुक्तमप्यत्र ग्राह्यम्।

सहस्रपरमां नित्यं शतमध्यां दशावराम्।
सावित्रीं वै जपेद् विद्वान् प्रयतः प्राङ्मुखः शुचिः॥

इति व्यासोक्तजपसंख्यायां विशेषमाहाश्वलायनः—

"आपन्नश्चाशुचिः काले तिष्ठन्नपि जपेद्दश"

इत्यापद्यशुचिकाले च न्यूनसंख्यामभ्यनुजानाति। आश्रमभेदेनापि संख्याविशेषं याज्ञवल्क्य आह—

ब्रह्मचारी गृहस्थश्च शतमष्टोत्तरं जपेत्।
वानप्रस्थो यतिश्चैव जपेदष्टसहस्रकम्॥ इति।
उत्तमं मानसं जप्यमुपांशुर्मध्यमः स्मृतः।
अधमं वाचिकं प्राहुः सर्वमन्त्रेषु वै द्विजाः॥ इति।

मानसादीनामुत्तमादिभावमभिधाय—

वाचिकं चैकमेकं स्याद् उपांशु शतमुच्यते।
सहस्रं मानसं प्रोक्तं मन्वत्रिभृगुनारदैः॥

इति मानसे बहुसम्मतिं सहस्रगुणफलातिशयं व्याचष्टे भगवान् विश्वामित्रः। "मनसैव जपं कुर्यात् सावित्र्यास्तु विशेषतः" इति व्यासवचनं त्वाशौचविषयं बोध्यम्।

प्रातरुत्तानपाणिभ्यां स्तब्धाभ्यां दिनमध्यतः।
अधोमुखाभ्यां पाणिभ्यां सायं संलक्षितो जपेत्॥

प्रातर्नासासमौ कुर्याद् मध्याह्ने तूरसा समौ।
सायङ्काले नाभिसमौ करौ कुर्यादतन्द्रितः॥

इत्युक्त्वा पवित्रकरत्वं जपकाले भगवान् व्यासोऽभिधत्ते—

अपवित्रकरोऽशुद्धः प्रलपन्न जपेत् क्वचित्।
अप्रावृतकरो वापि शिरसि प्रावृतोऽपि वा॥ इति।

अपवित्रकरत्वादिनिषेधाच्चान्येऽपि जपकाले वर्जनीया यथा—

नापाश्रितो न जल्पंश्च न प्रावृतशिरास्तथा।
न पदासनमाक्रम्य न पदेन पदं तथा॥ इति।
क्रोधं मान्द्यं क्षुधं निद्रां ष्ठीवनञ्च विजृम्भणम्।
दर्शनञ्च श्वनीचानां वर्जयेज्जपकर्मणि॥ इति।

श्वनीचादिदर्शनवर्जनमुक्त्वा दर्शने कर्तव्यमाह—

आचामेत् संभवे चैषां स्मरेद् विष्णुं सुरार्चितम्।
ज्योतींषि च प्रपश्येद्वा कुर्याद्वा प्राणसंयमम्॥
ज्वलनं गाश्च विप्रांश्च यत्किञ्चाघविशुद्धये।

इति संवर्तोक्तेस्तदुक्तपरिहारोऽपि कर्तव्यः।

चण्डालाशौचिपतितान् दृष्ट्वाचम्य पुनर्जपेत्।
तैरेव भाषणं कृत्वा स्नात्वाचम्य पुनर्जपेत्॥

इति भाषणे स्नानमप्यावश्यकम्।

श्वशूद्रपतितांश्चैव रासभञ्च रजस्वलाम्।
दृष्ट्वा तोयमुपस्पृश्याभाष्य स्नात्वा पुनर्जपेत्॥
मार्जारं कुक्कुटं क्रौञ्चं श्वानं गृद्ध्रं कपिं खरम्।
दृष्ट्वाचम्य जपेत् कर्म स्पृष्ट्वा स्नानं विधीयते॥ इति नारदः।
यदि वाग्यमलोपः स्याद् जपादिषु कदाचन।
व्याहरेद् वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम्॥

तद्विष्णोरिति मन्त्रोऽयं स्मर्तव्यः सर्वकर्मसु ।
गायत्री वैष्णवी ह्येषा प्रोक्तेदं विष्णुरित्यपि ॥

इति जपादिकर्मकाले वाङ्नियमनाकरणे कर्तव्यविशेषमुपदिशति भगवान् याज्ञवल्क्यः ।

नाभेरधः स्वकायं तु स्पृष्ट्वा संक्षालयेत् करम् ।
दक्षिणं वा स्पृशेत् कर्णं जपेद्वा विष्णुमव्ययम् ॥
नान्यथोक्तिर्नान्यमना न च व्यत्यस्तपत्करः ।
न जपेत् प्रलपन् वापि कृतं निष्फलमुच्यते ॥ इति यमः ।

तस्मात् कर्मसाफल्याय निषिद्धानामुक्तानां वर्जनमावश्यकम्, नान्तरीयकतया प्राप्ते चोक्तपरिहाराश्चावश्यमनुष्ठेयाः । अन्ये च कतिपयनियमविशेषा विहिताः । यथा—

होमः प्रतिग्रहो दानं भोजनाचमने जपः ।
न बहिर्जानु कार्याणि साङ्गुष्ठानि समाचरेत् ॥
उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गलावृतः ।
चिन्ताव्याकुलचित्तो वा श्रान्तः क्रुद्धो बुभुक्षितः ॥
अनासनः शयानो वा गच्छन्नुद्धत एव वा ।
रथ्यायामशिवस्थाने न जपेत् तिमिरावृते ॥
उपानद्गूढपादो वा यानशय्यागतस्तथा ।
प्रसार्य न जपेत् पादौ उत्कटासन एव वा ॥
जपेन्न प्रौढपादश्च नावष्टब्धोऽलसोऽशुचिः ।
नासंव्यानो ह्यदर्भश्च नाशिखोऽकच्छवन्धनः ॥

इति व्यासो ब्रूते । भगवान् भरद्वाजो जपवैरिणो दश प्राह । यथा—

निष्ठीवजृम्भणे क्रोधनिद्रालस्यक्षुधो मदः ।
पतितश्चान्त्यजालोका दशैते जपवैरिणः ॥

शाण्डिल्यो जपादौ कण्ठावृतवस्त्रत्वं प्रतिषेधति—

प्रदक्षिणे प्रणामे च पूजायां हवने जपे ।
न कण्ठावृतवस्त्रः स्याद् दर्शने गुरुदेवयोः ॥ इति ।

आचार्यं भगवद्भक्तं भगवन्मन्दिरं जलम् ।
अश्वत्थमग्निमर्कञ्च पृष्ठीकृत्य जपेन्न तु ॥
न क्लिन्नवासाः स्थलगो जपादीनाचरेद् बुधः ।
यदि स्यात् क्लिन्नवासा वै वारिमध्यगतो जपेत् ॥
कण्ठवस्त्रावृतस्यैव वस्त्रार्धालम्बिनस्तथा ।
उत्तरीयव्यपेतस्य समस्ता निष्फलाः क्रियाः ॥

इति सुमन्तुना वस्त्रावृतकण्ठत्वादौ समस्तक्रियानैष्फल्यमभाणि । "यदि स्यात् क्लिन्नवासा वै वारिमध्यगतो जपेत्" इति पूर्वोक्तव्यासवचनमापद्विषयम् । अत एव—

मतिमान्न कदाचित्तु गायत्रीमुदके जपेत् ।
गायत्र्यग्निमुखी प्रोक्ता तस्मादुत्तीर्य तां जपेत् ॥

इति गोभिलवचनं संगच्छते ।

गच्छतस्तिष्ठतो वापि स्वेच्छया कर्म कुर्वतः ।
अशुचेर्वा विना संख्यां तत्सर्वं निष्फलं भवेत् ॥

इति गौतमवचनाद् जपसंख्यानमावश्यकम् । "संख्या चेदुपवीतेन जपहोमादि निष्फलम्" इति संख्यागणने उपवीतोपयोगप्रतिषेधात्, रुद्राक्षादिजपमालासु जपस्य फलातिशयवचनाच्च जपमालाव्यवस्थावचनानि प्रदर्शयामः । तत्र जपमालालक्षणं मन्त्रशास्त्रे यथा—

अकारादिक्षकारान्ता अक्षमालेत्युदाहृता ।
अष्टवर्गैश्च संख्यातामष्टोत्तरशतं जपेत् ॥ इति ।

तत्र भगवान् हारीतो मालाभेदानाह—

शङ्खरौप्यमयी माला काञ्चनी निम्बजैः फलैः ।
पद्माक्षकैश्च रुद्राक्षैर्विद्रुमैर्मणिमौक्तिकैः ॥
राजतैर्द्राक्षकैर्माला तथैवाङ्गुलिपर्वभिः ।
पुत्रजीवमयी माला शस्ता तु जपकर्मणि ॥ इति ।

स्मृत्यन्तरे संख्याभेदोऽप्युत्तममध्यमाधमविभागपूर्वकमुक्तस्तथाहि—

अष्टोत्तरशतैर्माला पञ्चाशच्चतुरुत्तरैः ।
सप्तविंशतिभिः कार्या सर्वसाधारणे जपे ॥

अष्टोत्तरशतैर्माला ह्युत्तमा परिकीर्तिता ।
चतुष्पञ्चाशता माला मध्यमा परिकीर्तिता ॥
अधमा प्रोच्यते माला सप्तविंशतिसंख्यया । इति ।

फलविशेषश्चोक्तः—

अङ्गुल्या जपसंख्यानमेकमेकमुदाहृतम् ।
रेखयाष्टगुणं पुत्रजीवैर्दशगुणाधिकम् ॥
शतं स्याच्छङ्खमणिभिः प्रवालैश्च सहस्रकम् ।
स्फटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते ॥
पद्माक्षैर्दशलक्षं तु सौवर्णैः कोटिरुच्यते ।
कुशग्रन्थ्या च रुद्राक्षैरनन्तफलमुच्यते ॥
तुलसीकाष्ठघटितैर्मणिभिर्जपमालिका ।
सर्वकर्माणि सर्वेषामीप्सितार्थफलप्रदा ॥ इति गौतमः ।

अथ जपमालासंस्कारविधिः—

क्षालयेत् पञ्चगव्येन सद्योजातेन वै जलैः ।
चन्दनागरुगन्धाद्यैर्वामदेवेन घर्षयेत् ॥
धूपयेत्तामघोरेण लिम्पेत्तत्पुरुषेण तु ।
मन्त्रेण शतवारं तु पञ्चमेनाभिमन्त्रयेत् ॥

इत्याचार्यनवनीतोक्तः । जपकाले जपमालापतने प्रायश्चित्तमाह गौतमः—

उल्लङ्घिते तथा मेरौ पतिते चाक्षसूत्रके ।
प्राणायामत्रयं कृत्वा घृतप्राशनमाचरेत् ॥ इति ।
पर्वभिश्च जपः कार्यो नाङ्गुलीनां निपातनैः ।
तन्निपातैस्तु यद् जप्तं सर्वं विद्यात् तदासुरम् ॥

इति स्मृतिरत्नावल्यामङ्गुलिपातनेन जपस्यासुरत्वोक्तेरङ्गुलिभिर्जपसंख्यानमनुचितमिति ज्ञेयम् ।

ब्राह्मैरानन्त्यमाप्नोति रौद्रैश्च मणिभिर्बुधः ।
ब्राह्मः कुशमयो रौद्रो रुद्राक्षः पापनाशनः ॥ (सावशेषम्)



# सैतिह्यः संस्कृतेरर्थः

श्रीभागीरथप्रसादस्त्रिपाठी 'वागीशः शास्त्री', वाराणसीस्थः ।

सम्प्रति तावन्त एव सन्ति संप्रचलिताः संस्कृतेरर्था यावन्तो हि भारत्यां गोहरिशब्दाकृताः । समुल्लिखिता शब्दद्वयी तु सुनिर्णीतानामेवाभिधेयानामभिधायिका । प्रयुज्यमानः संस्कृतिशब्दस्तु तत्तद्देशीयानामनूनकक्रियाकलापानामाश्रूयते प्रदेशनः । स्यान्नाम तौर्यत्रिकता सप्ततन्तुप्रयुक्तवेदोच्चारणता वा, निखिला अभिव्यज्यन्ते व्यापाराः संस्कृतिशब्दमास्थाप्य ।

केषाञ्चन कोविदानां विचारेण 'Culture शब्दानुवादत्वादेतस्मिन्नर्थे प्रकृतसंस्कृतिशब्दस्यासध्रीचीनत्वम् । Culture समुद्गमशब्दस्य Cultra इत्यस्याभिधेयं विद्यते कृषिरिति Culture तात्पर्येण कृष्टिशब्द एव प्रयोजनीयः' इति ।

अद्यत्वे येष्वर्थेषु प्रयुज्यते संस्कृतिशब्दस्तेषु कतिपय इमे—

१. शोधनम्, २. उन्नतिः, ३. कर्षणम्, ४. समुत्पत्तिः, ५. सभ्यता, ६. विकासः, ७. आभूषणम्, ८. नैतिकमनुशासनम्, ९. मानवीयव्यक्तित्ववैशेषीसन्दोहः, १०. प्रसाधितं वर्तनम्, ११. भूषणभूतकृतिरित्यादयः ।

समन्वयात्मिकया भारतीयदृगश्र्या संस्कृतिशब्दार्थ इह प्रस्तूयमानः—

'संपरिभ्यां करोतौ भूषणे' ( पा० सू० ६।१।१३७ ) इत्यनेन √ कृधातोर्भूषणार्थकः सुट् प्रत्ययो भवति । एतस्यानुसारेण सम् =सम्यक् =शोभना, स् ( सुट् )=भूषणभूता, कृतिः= क्रिया जायते संस्कृतिशब्दार्थः । 'कृतिः करणहिंसयोः' (मे० को०) संस्करणम् =संस्कृतिः, संस्करणम्=संस्कारः । भावे क्तस्य घञो ल्युटस्क्तिनश्च सत्त्वात् संस्कृतिसंस्कारसंस्कृतशब्दानामनर्थान्तरत्वम् । सुड्विधायकं पाणिनेरपरं सूत्रं स्मरणीयम्—'समवाये च' ( ६।१।१३८ )इति । समवायार्थे संपूर्वकात् कृधातोः सुड् भवतीति तदर्थः । 'स्थानेऽन्तरतमः' ( १।१।५० ) सूत्रस्य महाभाष्ये 'कस्याञ्चित् क्रियायां मेलनम्' इति व्यधायि समवायस्यार्थः कैयटेन । 'समुदित इत्यर्थः' इति पदमञ्जरी । संस्कुर्वन्ति=सङ्घीभवन्तीति भट्टोजिदीक्षितः । प्रकृतसूत्रदिशा संस्कृतिशब्दस्यार्थः—सङ्घीभावः पूर्वोक्तश्चेति । अर्थद्वयासत्त्वेऽपि संपूर्वकात् कृधातोर्दृश्यते सुट्प्रत्ययः—'संस्कृतं भक्षाः' ( ४।२।१६ ) इतीह । व्याकरणं भूषणसंघातेत्यर्थयुगं सूत्रणं प्रतिपादयति । एतदर्थद्वयमति-

रिच्यापि समुपलभ्यन्ते भूयिष्ठा अर्थाः संस्कृतवाङ्मये इत्यदसीयशब्दार्थविकासं परीक्षिष्यामहे वयं सुविशङ्कटे प्रयोगप्राङ्गणे ।

## संस्कारशब्दस्यार्थः

'संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम्' ( अ० को० २।६।१३४ ) इति माङ्गल्य-धूपप्रभृतिभिर्वाससां ताम्बूलादीनां वा सुवासितत्वं संस्कारः । इह संस्कारशब्देनैकस्य वस्तुन इतरत्र प्रभावनिपातनं वर्णादिसंसक्तिर्वाऽभिप्रेयते ।

मेदिनीकोशकारानुमोदितं 'संस्कार'शब्दार्थत्रयं सुमननीयम्—

'संस्कारः प्रतियत्नेऽनुभवे मानसकर्मणि' ( शब्दवर्ग २३३ )

१—प्रतियत्नः=गुणान्तराधानम्, रचना ।

२—अनुभवः ।

३—मानसकर्म च ।

शतपथब्राह्मणे 'इष्टकाचयन'निरूपणावसरे प्रतियत्नार्थकः प्रयुक्तः संस्कृतिशब्दः—

'अथातः संस्कृतिरेव सा । या अमूरेकादशेष्टका उपदधाति'

( श० ब्रा० का० ८, अ० ३, ब्रा० १, ख० ११ )

तृतीयचितौ या इष्टकाः सन्ति ताभिरुपहताभिश्चित्याग्निरूपस्य प्रजापतेर्लोकस्तदभि-मानिदेवतादिरूपः संस्कार एवोत्पाद्यत इत्यर्थः ( सायणभाष्यम् ) । संस्कारोत्पादनं नाम गुणान्त-राधानमिह संस्कृतेरर्थः ।

शतपथब्राह्मणे सोमक्रयरूपयत्नार्थकः प्रयुक्तः संस्कृतिशब्दः—

'स जुहोति । सा प्रथमा संस्कृतिर्विश्ववारा'

( श० ब्रा०, का० ४, अ० २, ब्रा० १, ख० २७ )

सोमस्य क्रयरूपा या संस्कृतिः क्रियते सा प्रथमा, अभिषवादिसंस्काराणां तदनन्तर-भावित्वात् ( सायणभाष्यम् )=अभिषवादिसंस्कारेभ्यः प्राक् सोमः क्रीयते । तदेव क्रयणं ( विनिमयः ) समपद्यत प्रथमा संस्कृतिः । सा विश्वैः=समस्तैर्ऋत्विग्भिर्वारा=वरणीया विराजते । इह विश्वशब्देन संसारो नाभिमन्यते, अप्राकरणिकत्वात् ।

ताण्ड्यब्राह्मणे गुणाधानार्थकः संस्कृतिशब्दः—

## सैतिह्यः संस्कृतेरर्थः

'सुता इन्द्राय वायव इति संस्कृत्यै' ( ता० म० ब्रा० ११,३,१ ) 'संस्कृत्यै=संस्कार-गुणातिशयाधानाय भवति' इति तदर्थः ।

शतपथब्राह्मणे गुणोत्कर्षहेतुकः प्रयुक्तः संस्कृतिशब्दः—

'नैतस्य पुरुषस्य बाहू कुर्यात्'·····'एतयोरेव सा संस्कृतिरेतयोर्वृद्धिः·····' ।

( श० ब्रा०, का० ७, अ० ४, ब्रा० २, ख० ४५ )

संस्कृतिः=गुणोत्कर्षहेतुः संस्कारः ( सायणभाष्यम् ) ।

संस्कारमात्रार्थकः संस्कृतिशब्दः—

'देवस्थानं भवति प्रतिष्ठायै, सङ्कृतिर्भवति संस्कृत्यै'

( ता० म० ब्रा० १५,३,२८ )

संस्कृत्यै=संस्काराय ( सायणभाष्यम् ) ।

ताण्ड्यमहाब्राह्मणस्य क्रमेण सामवेदस्याभिधानं सङ्कृतिरासीत्, साम्ना देवगणस्य संस्कारात् । तद्यथा—

'सङ्कृतिना समस्कुर्वंस्तत् सङ्कृतेः सङ्कृतित्वम्, देवस्थानेन वै देवाः स्वर्गे लोके प्रत्यतिष्ठन्' ( १५,३,२८ )

संस्कारसाधनत्वात् साम्नो नामधेयं सङ्कृतिः । सङ्कृतित्वमिति तत् संस्कृतिसंवलितमिति सायणीयो भावार्थः ।

प्रथमतः कृधातोः सुट्प्रत्ययविधानाभावो ज्ञायते । सङ्कृतिशब्दस्य विकासः संस्कृतिरिति ।

ऐतरेयारण्यकेऽतिशयहेत्वर्थकः संस्कृतिशब्दप्रयोगः—'यानि दश नव प्राणा आत्मैव दशमः, सात्मनः संस्कृतिरष्टावष्टा उद्यन्तेऽश्नुते यद्यत् कामयते य एवं वेद' । (ऐ० आ० १,३,७)

संस्कृतिः=अतिशयहेतुः ( सा० भा० ) । अतिशयहेतुरयं प्रभावादतिरिक्तो नास्ति कश्चन ।

अमरसिंहीये नामलिङ्गानुशासने क्रियायाः=कृतेः सन्ति नवार्थाः—

आरम्भो निष्कृतिः शिक्षा पूजनं संप्रधारणम् ।
उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः ॥

१—आरम्भः=प्रक्रमः, २. निष्कृतिः=ऋणाद्युन्मोचनम्, ३. शिक्षा, ४. पूजनम् = सत्कारः, ५. संप्रधारणम् =निश्चयः, ६. उपायः=उद्योगः, ७. कर्म, ८. चेष्टा=इच्छापूर्वको यत्नः, ९. चिकित्सा=सुधारः ( रुगादिप्रतिक्रिया )।

वाजसनेयिसंहितायां प्रयुक्तः सत्कारार्थकः संस्कृतिशब्दः—

'सा प्रथमा संस्कृतिर्विश्ववारा' (७।१४)

संस्कृतिः—सोमसत्कारः क्रियते सोमक्रये। विश्ववारा—विश्वैः सर्वैर्यत्र सोमो व्रियते। विश्वं वृणोति वा। सोमे क्रीयमाणे यत्र जगदुत्पत्तिबीजत्वात् सा विश्ववारा संस्कृतिः।

( उव्वटभाष्यम् )

विश्वैः = सर्वैर्ऋत्विग्भिरनृत्विग्भिश्च व्रियते यत्र सोमः सा विश्ववारा। यद्वा विश्वं वृणोति क्रीयमाणः सोमो यत्रेति विश्ववारा, जगदुत्पत्तिबीजत्वात्। ( महीधरभाष्यम् )

अमरकोशे क्रियायाः=कृतिमात्रस्य पूजन = सत्कारार्थो मननीयः। इह संस्कृतेः सोमसत्कारार्थः प्रसङ्गात् सोमस्य ज्ञायते। अन्यथा सा सत्कारमात्रस्य वाचिका, न तु सोमसहितस्य तस्येति।

श्रीमद्भागवते प्रयुक्तः पवित्रीकरणसंस्कारार्थकः संस्कृतिशब्दः—

'पुरोधसा ब्राह्मणैश्च यथावद् द्विजसंस्कृतिम्'

( १०।४५।२६ )

√वज √व्रज संस्कृतौ—वोपदेवः (चु० प०)। एताभ्यां वाजिः, व्रजः, परिव्राजकश्च सिद्ध्यन्ति।

समुद्धृतेष्वखिलेषु ग्रन्थेषु 'संस्कृति'शब्दो लभ्यते प्रतियत्नानुभवमानसकर्मार्थकः सुस्पष्टं प्रयुक्तः। प्रथिताप्रथितेष्वन्येषु ग्रन्थेषु नासावुपलभ्यमान इत्यर्थशृङ्खलाऽविच्छित्तये तन्नीकाशता-मावहमानं 'संस्कार'शब्दं प्रस्तोष्यामः। उभयत्र विराजते पूर्वोक्तदशा तात्पर्यसामी।

समुदाहृतसंस्कृतिशब्दार्थो नास्ति भूषणभूतकृतिरिति। इहत्योऽर्थस्तु—उत्तरोत्तरं जायमानक्रियाणां समुदितः प्रभाव इति। संस्कृतिर्नास्ति क्षणेष्वेव घटितघटनाविवरणम्। सा त्वने-कक्रियासङ्घातकलितभावनाविशेष इति ( संस्कारः=भावनाख्यः, [ अन्नम्भट्टकृततर्कसंग्रहटीका-याम् ] भावना=क्रिया )। सम्=क्रमतः, पुनः—'स्' = समुदायरूपेणागता, कृतिः=क्रिया नाम संस्कृतिरिति कस्यापि देशस्य संस्कृतिः स्वात्मनि परस्सहस्रवत्सराणामैतिह्यमुपगूहत इति

## सैतिह्यः संस्कृतेरर्थः

संस्कृतीतिहासौ नानर्थान्तराभिधायकौ। ऐतिह्यमभिव्यनक्ति भूतकालिकतामेव। संस्कृतिस्तु सातत्यबोधिका। सभ्यत्वासभ्यत्वपरिभाषा नासते सार्वभौमसमत्वप्रतिपादिकाः। भारतीय-सभ्यताविशेषस्य 'आफ्रिका'प्रभृतिदेशेष्वसभ्यताविशेषत्वेन, तत्रत्यस्य च सभ्यताविशेषस्य भारतादि-देशेष्वसभ्यताविशेषत्वेनाभ्युपगमो नूनं सम्भवीति 'संस्कृति'शब्देन सभ्यतातौल्यं सुतरामाधत्ते दुष्प्रयोजनीयताम्। संस्कृतेराकूतं तु—( मिथः ) क्रमिकप्रभावनिपतनसमुदितरूपतेति।

संस्कृतेरर्थावबोधाय तत्त्वमिदमिह सुमननीयम्—कृतेः = क्रियामात्रस्योच्चारणेन प्रवेक-( समुदित )क्रियानुस्यूतविविधक्रियावबोधनं स्वत एव जञ्जन्यते[1]। यथा पचिम् = विक्लित्य-नुकूलव्यापारमुदाहरामः। एतदुच्चारणे—१-भोजननिर्मित्सा- २-तत्पूर्त्यर्थकयत्न- ३-समुत्थिति-४-इन्धनाद्यानयन- ५-चुल्ल्युत्थापनपरिष्करणादि- ६-इन्धनादियोजन- ७-तैलादिसेचन- ८-वैश्वा-नराहिति- ९-तण्डुलादिसम्मृष्टता- १०-उखाधिकरणकजलादिनिवेशन- ११-चुल्ल्युपरिस्थापन-१२-लवणाद्यायोजन- १३-शाकतनूकृति- १४-दाल्यादिचालन- १५-अट्टगोधन- १६-दाल्या-द्यधःस्थापन- १७-तद्व्याघार- १८-शाकभावन- १९-चुल्ल्यधिकरणकर्जीषादिस्थापन- २०-रोटि-कावेलन-प्रभृतिभिः क्रियाभिः समुदिता, प्रकृतक्रियावसाने वा कृतिरेका जायते—पचिः = विक्लित्यनुकूलव्यापार इति नाम।

पचामीत्यभिहितौ समुदाहृताः सकलाः क्रियाः पचिरूपक्रियोदीरणेन सहैव मनोभित्ता-वास्माक्यां क्रमिष्यन्ति नन्वालेख्यसङ्काशाः। एषा पचिक्रिया समग्राणां ( पूर्वोक्तानां ) क्रियाणां समुदिता कृतिः = क्रिया। पचेर्व्याहारे काऽप्येका कृतिर्न शक्यते निर्देष्टुम्। यत्रैषा कृतिः क्रमेण सविधानं प्राप्येत तर्हि संस्कृतिः। नैसर्गिक्येषा भवति प्रातिनिध्यं च विधत्ते मानवीयभावनानाम्। सत्रैतया भूषणाभूषणयोः प्रश्न एव नोदेतीति संस्कृतेर्भूषणभूतकृतिरर्थो न हृदयावर्जकः। विभिन्नेषु देशेष्वसौ सवैविधि संप्राप्यत इत्येतदर्थो भूषणाभूषणात्मकतया शोभनाशोभनात्मकतया वा न वाञ्छनीयो विधातुम्।

---

१. नानाक्रियाः कृषेरर्थाः। नावश्यं कृषिर्विलेखन एव वर्तते। किं तर्हि? प्रतिविधा-नेऽपि वर्तते; यदसौ भक्तबीजबलीवर्दैः प्रतिविधानं करोति स कृष्यर्थः।

( म० भा० ३।१।२६ )

खर्जूरवाहमन्दिराणि व्यञ्जन्ति तात्कालिकं स्थापत्यविधिम्, स्मारयन्ति च तात्कालिकान् मनोभावप्रभावान्। तानि विलोक्य वयमैतिह्यमनुसंदध्मः।

अनयैव क्रमिक्या सांसिद्धिक्या कृत्याऽनुपदं शिष्टतायाः (= बहुमतस्य) रूपमाकलितम्। शिष्टतार्थं औत्तराहः। नियमानां पश्चात्तनता खलु सर्वतोदिक्का। दोषगुणविवेचन-पुरस्सरं व्यपवृक्तिचयौ नाम सुधारः। संस्कृतिर्जनमनोभावप्रतिकृतिर्नाम। नैसर्गिको मनोभाव-स्तत्क्षणं गुणदोषरूपत्वेन न पार्यते विभाजयितुम्। गुणदोषविवेचनं पश्चात्तनी कल्पना। खर्जूरवाहमन्दिरमूर्तयस्तथाकथितसभ्यताभिमानिभिः परिगुण्ठितदोषा द्रक्ष्यन्त इति ताः सुधारणीयाः स्युः। असत्यपि सुधारे ता जनमनोभावान् स्मारयन्ति तात्कालिकान्। सा संस्कृतिः।

इह संस्कृतेरर्थः—प्रभावः, सङ्क्रमणम्। भारतीयाः संस्कारविधयो वै सुवित्ता इद-मीयेऽर्थे। यथा—उपनयनसंस्कारसमावर्तनसंस्कारविवाहसंस्कारप्रभृतयः। एतेषां संस्काराणामिति-कर्तव्यता स्वप्रभावनिपातनमात्रम्। पूतापूताख्यानं कालानुरूपेण कल्पनामात्रम्। जटाधरेण संस्कारो हि शुद्ध्यनर्थान्तरत्वेनोक्तः। तदीया व्याख्या खलु—'अदृष्टविशेषजनककर्म' इति। तदर्थस्तु—प्रभावनिपातनेन नव(विलक्षण)रूपदं कार्यमिति। इह पुनरैतिह्यश्रृङ्खलाक्रम इत्थम्—

वाजसनेयिसंहितायां प्रयुक्त उपकरणार्थकः सम्पूर्वकः कृधातुः—'संस्कृतम्' (४।३४) = सर्वोपकरणयुक्तम् (उव्वटभाष्यम्)।

मनुस्मृतिपाल्या विविधार्थेषु प्रयुक्तः संस्कार(= संस्कृति)शब्दः—

कार्यः शरीरसंस्कारः (मनु० २।२६) = गर्भाधानादिशरीरसंस्कारः (कु०भ०)।

संस्कारार्थं शरीरस्य (मनु० २।६६) = शोधनार्थम् (कु० भ०)।

संस्कारो वैदिकः स्मृतः (मनु० २।६७) = उपनयनाख्यः (कु० भ०)

संस्कर्ता चोपहर्ता च (मनु० ५।५१) = पाचकः। संस्कारः = पाचनम्।

या गर्भिणी संस्क्रियते (मनु० ९।१७३) = परिणीयते (कु० भ०)।

संस्कारः (संस्कृतिः) = परिणयः।

## महाभारते भावनार्थः संस्कारः

भावितम् (१२।३।२१६'९) = संस्कृतम् (नी०क०)।

भावः (१२।३।२७५।९) = पूर्वसंस्कारः (नी० क०)।

## सैतिह्यः संस्कृतेरर्थः

महामुनिपाणिन्यनुसारेण षट्स्वर्थेषु प्रयुक्तः सम्पूर्वकः कृधातुः—

१. संपरिभ्यां करोतौ भूषणे ( ६।१।१३७ )=भूषणे ।

२. समवाये च ( ६।१।१३८ )=सङ्घाते ।

३. संस्कृतम् ( ४।४।३ )=सत उत्कर्षाधानं संस्कारः ।

४. संस्कृतं भक्षाः ( ४।२।१६ )=विनियोगे ( सङ्क्रमण इत्यर्थः ) ।

५. संस्कारे ( क्षी०त०१०।२३५, धा०वृ०१०।८३ )=मार्गधातुः । मार्गः ।

६. संस्कारे ( धा०वृ०१०।८३ )=व्रजधातुः । व्रजः ।

## बौद्धमतानुसारेण संस्कारः

संस्कारवन्धः—पुण्यापुण्यादिधर्मसमुदायः ( सूत्र १, अ० १ उ ) ।

संस्कारस्कन्धः—रागद्वेषमोहमदमात्सर्यभयशोकविषादादिचित्तजधर्माणां नामधेयम् । ( वैभाषिक-सौत्रान्तिकमतम् )

भगवत्पतञ्जल्यनुसारेण संस्कारशब्दान्तरम्—

अनुभूतविषय—( यो० सू० १।११ )=सकलवृत्तीनामनुभवे जायते संस्कारः ( भास्वती-टीकाभावार्थः ) ।

महाभाष्ये प्रयुक्त उपयोगफलक्रियार्थः संस्कारः—

'उपयोगफला हि क्रिया संस्कारः' इति मन्यते—कैयटः ( तत्र जातः ४।३।२५ ) । उपयोगः=साक्षाद्भोजनादौ विनियोगः—नागेशः ( ४।३।२५ )

न्यायशास्त्रे संस्कारः (=संस्कृतिः ) गुणविशेषः । स च त्रिविधः—

१—वेगसंस्कारः—मूर्तपदार्थस्थायी । क्वचिद् वेगजन्यः, क्वचिच्च कर्मजन्यः ।

२—स्थितिस्थापकसंस्कारः—पृथिव्यप्तेजोवायुगुणोऽतीन्द्रियः स्पन्दनहेतुश्च ।

३—भावनासंस्कारः—आत्मनोऽतीन्द्रियो गुण एषः । उपेक्षातो भिन्नः, निश्चयजन्यः । अयं स्मरणप्रत्यभिज्ञानयोर्हेतुः [ भाषापरिच्छेदे ] ।

## कालिदासेन रघुवंशे प्रयुक्तं संस्कारार्थत्रयम्

१—प्रतियत्ने ( गुणान्तराधानरूपे )—'प्रयुक्तसंस्कार इवाधिकं बभौ' संस्कारः= शाणोल्लेखादि ( म० ना० ) ।

२—अनुभवे—'संस्काराः प्राक्तना इव' ( १।२० )

संस्कारः=पूर्वकर्मवासना ( म० ना० )।

३—मानसकर्मणि—'निसर्गसंस्कारविनीत इत्यसौ' ( ३।३७ )

संस्कारेण=शास्त्राभ्यासजनितवासनया ( म० ना० )।

मृच्छकटिके संस्कारार्थो निश्चयः ( बुद्धिः, विचारः ) इति—

'अहो ! स्थिरसंस्कारता व्यवहारार्थिनः'

( अङ्कः ९, पञ्चमश्लोकादधस्तनं गद्यम् )

## वाचस्पतेर्मतेन संस्कारार्थाः

१—गुणान्तराधानरूपः प्रतियत्नः ( सङ्क्रमणम् )। यथा—अलङ्काररत्नवस्त्रादीनां क्रमश उद्दीपनं तीक्ष्णीकरणं मार्जनं चेत्यादि।

२—व्रीह्यादेर्यज्ञाङ्गाय निमित्ताय वैदिकमार्गेण सिञ्चनं नाम संस्कारः ( संस्कृतिः )।

३—शास्त्राभ्यासजन्या व्युत्पत्तिः।

४—व्याकरणभङ्ग्या शब्दसाधनप्रकारः।

५—गर्भाधानादिषोडशसंस्काराः।

६—क्रियाकलापः।

७—पाकश्च।

भट्टिकाव्ये संपूर्वकस्य कृधातोरर्थो योग्यताप्राप्तिः—

'यज्ञियैः संस्कृता द्विजैः' ( ७।४५ )—संस्कृता=योग्यत्वमापादिता ( जयम० )।

प्रणयनसंस्कारोल्लेखो माघे ( १४।२२ ) समधिगम्यते।

हेमचन्द्रेण संस्कारस्यार्थत्रयं प्रादर्शि—१–वासना, २–भावना, ३–अनुभूतस्याविस्मरणं चेति ( अभिधानचिन्ता० १३७३ )।

नानार्थसंग्रहकारेणार्थद्वयं न्यदर्शि—१–सङ्कल्पः (=निश्चयः ), २–यत्नश्चेति ( ५८ )।

शाश्वतकोशः सङ्कल्पप्रतियत्नेत्यर्थद्वयानुमोदकः—( ५५८ )।

अनेकार्थसंग्रहो मेदिनीकोशोक्तार्थत्रयादभिन्नार्थप्रतिपादकः—( अ० स० ३।६१० )।

## सैतिह्यः संस्कृतेरर्थः

महाभारतादिग्रन्थेषु क्रियाया अर्थः संस्कारः (=संस्कृतिः)। अत्र संस्कृतिः क्रियामात्रतां विज्ञापयति—

कर्तुम् (म० भार० ४।१।९।१८)=संस्कर्तुम् (नी० क०)।

कुरुते (म० भार० १२।३।२७०।२)=संस्कुरुते (नी० क०)।

शून्यानलकांश्चकार (रघु० ६।२३)=संस्कृतवान् (म० ना०)।

कृतक्रियः (रघु० ८।४)=क्रिया=अभिषेकसंस्कारः (म० ना०)।

सङ्क्षेपतः कल्चर (Culture) इत्येतन्मूलरूपस्य कुल्ट्रा (Cultra) इत्येतस्यार्थः कृषिरस्तीत्येतस्माद्धेतोः कल्चर (Culture) इत्यस्यानुवादः कृषिरिति मतमतितरामसङ्गतम्, एवमर्थप्रकाशनस्य 'संस्कृति'शब्दस्य सङ्कृति(साम)प्रतीकाशग्रन्थेषु प्रथमतो विद्यमानत्वात्। कुल्ट्रा(Cultra)—कल्चर(Culture)शब्दनदेशानां संस्कृतेः प्रक्रमः स्यात् कृषितः। भारतीयसंस्कृतेरुपक्रमो जातः स्यात् किल विनिमयात्। भारतभूर्धान्यराशिमुद्गिलति स्माकृष्टपच्या। कर्षणवपने परवर्तिनी। संस्कृतिशब्दप्रयोजनीयता कृष्यर्थेऽपि सुशकेत्यन्यत्तत्त्वम्। भूमिरपि संस्क्रियते। 'हलषष्ठी'विशेषसंस्कारदिवस इदमीयः। प्रकृते निबन्धे निरूप्यमाणैतिह्यदृष्ट्या भारतीयसंस्कृतेरुपक्रमो नास्ति कृष्याश्रयणः।

'यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत्' इति रीत्या संस्कारः (वर्णादिः) अभिनवे नवनिभे वा (ग्राहके) वस्तुनि सञ्जायते। कस्याश्चिदपि क्रियायाः संस्कारो दुर्मार्जनीयः पुनः। बलाबलविचारेण तु विविधसंस्कारसंभवः। एष आदिसंस्कारः=क्रमिकः कृतिसमुदायः संस्कृतिर्ननु। मनोभावानां (व्यक्तित्वस्य) प्रतिमा, मनोभावविनिमयप्रतिफलाऽसौ। विकासोऽस्यां स्वतः परिदृश्यमान इति किमपि विशेषणमनायोज्य संस्कृतिर्नाम 'पारम्परिकः क्रियासमुदायः' माननीयः। औपरिष्टैरुदाहृतैः कोऽपि मुख्यो व्यापारः क्रमिकः साधित एवेति संस्कृतिर्नाम 'क्रियानिकरः'। क्वापि क्रियाया मनोभावविशेषः (व्यक्तित्वम्) सन्निहितो भवत्येवेति पार्थक्येनेदमपि विशेषणमनाकाङ्क्षणीयम्। महाभारते कृतेरर्थः स्वभावः, सामर्थ्यमपि तिष्ठति (२।६५।३२)।

'संस्कृति'शब्दार्थस्य क्रमिकपरिवर्तनैतिह्यं नास्त्यूर्मिवत्। शब्दोऽयं मूलतः 'प्रतियत्न'-(= सङ्क्रमण, रचना) सामग्र्याद्यर्थे प्रयुक्तः खलु—श० ब्रा०, मभार० पाणि०। शनैः शनैरेतदीयोऽर्थः स्थूलताकोणतः सूक्ष्मताकोणं प्रति पदमधात्। 'संस्कृति'शब्दः प्रारभत तदाऽ-

नुभवार्थे प्रयोक्तुम् —ता० म० ब्रा० ( ११।३।१ ); रघु० ( १।२० )। परिवर्तनस्य तृतीयस्यां धारायां प्रकृतशब्दो मानसकर्मार्थे प्रयुक्तो जातः—म० भार० ( १२।३।२१६।९ ) ( २।६५।३२ ), रघु० ( ३।३७ ), मृच्छक० ( ९।५ ), भट्टि० ( ७।४५ )। मानसकर्मणोऽर्थस्तु—विचारो भावना योग्यताप्राप्तिप्रभृतीति। एष तृतीयः परिवर्तितोऽर्थ इदानीन्तने प्रयुज्यमान'संस्कृति'शब्दे मननीयः किल। तदर्थः कृतिः = कार्यमिति न भूत्वा विचारवारो जायते।

कालक्रमेणावरोहविलोमदशायां 'संस्कृति'द्वारा प्रतियत्नाद्यर्थाभिव्यञ्जनसंभावना सुस्थिरा। शब्दोऽयं स्थूलताप्रकाशनकार्यार्थमपि प्रयुक्तो भवितुं शक्ष्यति, कस्यापि स्थूलकार्यबीजस्य मानसकर्मस्थत्वादिति कदाचिद्धलचालनप्रकारविचारापरिगणनीयकार्याणां देशान्तरे संस्कृतिनाम्ना मिथः प्रदर्शनसंभविष्यमाणत्वम् ॥



# काश्यां मृतानां जीवानां कृतेऽन्त्येष्ट्यादिविचारः

श्रीरामनारायणत्रिपाठी, वाराणसीस्थदयालुसंस्कृतविद्यालयेऽध्यापकः ।

प्रायो हि जना अत्र संशेरते यत् काश्यां मृतानां जनानां शास्त्रैर्मुक्तौ निश्चितायां सत्यां तदर्थं स्वजनैः क्रियमाणानामौर्ध्वदैहिकादिक्रियाणां मृतजनहिताय कीदृश्युपयोगितेति । सम्प्रति काशीमृतानां कस्मान्मुक्तिः कदा चेत्यादिसर्वमसामयिकत्वादुपेक्ष्य तदन्त्येष्ट्यादिक्रियोपयोगिताविषये एव किञ्चिद् विचार्यते ।

ननु मृतमानवानां सद्गतिप्राप्तय एवैताः क्रियाः क्रियन्त इति लोके शास्त्रे च निर्विवादम् । तत्र सद्गतिः किमुत वक्तव्या, ततोऽधिका निरतिशया मुक्तिरेव काशीतनुत्यागिभिरवाप्यते । तदा तद्धेतुकक्रियमाणक्रिया निष्फलैव स्यादिति चेन्न, एतासां क्रियाणां मृतकं प्रति स्वकर्तव्यतानिर्वाहा-यापि क्रियमाणत्वेन काश्यां मरणेन मुक्तौ सत्यां तासां क्रियाणां वैयर्थ्येऽपि क्षत्यभावात् । तत्र बहुविधस्वकर्तव्यतायामेतदपि कार्यं सन्तिष्ठते । यतो हि मानवानां परमपुरुषार्थावाप्तिः परमप्रयो-जनम् । तत्राधिकारिणा गार्हस्थ्ये ऋणत्रयमप्यपाकरणीयम् । तदुक्तम्—"ऋणत्रयमपाकृत्य मनो मोक्षे निवेशयेत्" इति । स ऋणत्रयापाकर्ताऽहरहर्नित्यनैमित्तिकविधिं कुर्वन् दुरितक्षयपूर्वकं मोक्षसाधनं ज्ञानमर्जयति । अतः श्रेयःसाधनाय ऋणत्रयापाकरणमावश्यकम्, तत्र ऋणत्रयेऽन्यतमं पितृ-ऋणमप्यस्ति । तदपाकरणं च—

जीवतोर्वाक्यकरणान्मृताहे भूरिभोजनात् ।
गयायां पिण्डदानाच्च पुत्रस्यानृण्यता भवेत् ॥

इत्यभियुक्तोक्त्या जीवन्मातृपितृसमादरात्, मृताहे भूरिभोजनात्, गयायां पिण्डपातनाच्च भवति । तत्र मृताहभूरिभोजनमौर्ध्वदैहिकसर्वपिण्डोदकादिकृत्योपलक्षणम् । अन्यथा "त्रिरात्रं दशरात्रञ्च शावमाशौचमुच्यते" ( व० स्मृ० ४३० ) इति वचनात् तद्दिन आशौचपातः, आशौचञ्च वर्णाश्रमविहितकर्मानुष्ठानसङ्कोचावस्था । अपि च—

भिक्षुर्भिक्षां न गृह्णीयाद् यावन्न पिण्डमेलनम् ।
भुक्त्वा तु ब्राह्मणाशौचं चरेत् सान्तपनं द्विजः ॥ ( म० पु० )

इत्यादिवचनात्तद्दिने भोजनादिनिषेधेन तत्पुत्रादेरन्नमेव न गृह्णन्ति जनास्तर्हि कथं भूरिभोजनसम्पन्नता स्यात्। अतः सिद्धं यदाशौचानन्तरं द्वादशाहे त्रयोदशाहे वा भूरिभोजनकर्मणः सम्पन्नता भवेत्। उक्तञ्च मात्स्ये—"क्षत्रादिः सूतकान्ते तु भोजयेदयुतं द्विजान्" (१८।८) इति। भूरिभोजनपदस्य पिण्डदानाद्युपलक्षणत्व एतान्यपि प्रमाणानि मार्कण्डेयस्मृतौ—"भूरिभोजनकर्मापि तदन्ते सम्यगाचरेत्" इति, "भूरिभोजनकर्मैतत् श्राद्धान्ते स्यात् स्वभक्तितः" इति च।

लौगाक्षिस्मृतावपि—"पूर्णसूतकिनां सर्वं सूतकान्तेऽखिलं भवेत्" इति।

किं बहुना प्रकथनेन, एतस्मिन् विषये यदाशौचाभावेऽपि संन्यासिमरणे दशाहानन्तरमेवैकादशाहे पार्वणं द्वादशाहे नारायणबलिं कृत्वा तद्दिने त्रयोदशाहे वा यथाचारं ब्राह्मणयतिभोजनरूपाराधनं विहितम्। यदत्रेदृशी व्यवस्था वर्तते, तर्हि किमुत वक्तव्यं गृहस्थाश्रमिणाम्।

पूर्वोक्तेनैतावता सिद्धमेतद् यत्सर्वमौर्ध्वदैहिकं कर्म आनृण्यहेतुकमेव। एवं गयायां पिण्डपातनमप्यानृण्यहेतुकं कर्मेति। अत्रैवान्यानि वाक्यानि—"गयायां पिण्डदानेन पितॄणामनृणो भवेत्" इत्यादीन्यनुरुन्धन्ति। क्वचित्—

> जीवतोर्वाक्यकरणान्मृताहे भूरिभोजनात्।
> गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता॥ (मा० स्मृ०)
> जीवतो वाक्यकरणे मृते च भूरिभोजने।
> ऋणसंशोधनार्थाय त्रिभिरेव सुतः सुतः॥ (ब्रह्मोक्तया० सं० ४।१४)

"गयां गत्वाऽन्नदाता यः पितरस्तेन पुत्रिणः" एवंविधेषु वचनेष्वपि पितृ-ऋणापाकरणमपि पुत्रस्यावश्यकं कार्यं कर्तव्यत्वेन निर्धारितं प्रतीयते। तस्मादावश्यकमेतत्कार्यं पुत्रादीनाम्।

एतदप्यत्र विचारणीयं यच्छास्त्रविहितस्य नित्यनैमित्तिककर्मणः कर्तव्यता समेषां श्रौतस्मार्ताश्रमिणां कृतेऽत्यावश्यकी वर्तते। तत्र "ब्राह्मणस्य सोमविद्याप्रजमृणवाक्येन संयोगात्" इति षाष्ठाधिकरणन्यायेन आवश्यककर्मानुष्ठानार्थार्थज्ञानाख्यप्रयोजनद्वारेणाध्ययनस्येव, और्ध्वदैहिककर्मणो गयाश्राद्धस्य च प्रयोजनद्वारेण नित्यता सिद्धा। तथा चोक्तम्—

> देवहीनानि सर्वाणि प्रेतोद्देशेन यान्यपि।
> तानि सर्वाण्यशुचिना निर्वर्त्यान्येव सर्वदा॥

## काश्यां मृतानां जीवानां कृतेऽन्त्येष्ट्यादिविचारः

अत्याज्यानि भवेयुर्वै कालप्राप्तानि केवलम् ।
तानि नैमित्तिकान्येव कामान्येवं बहूनि हि ॥
(लौ० स्मृ० ३६७ पृ०)

तस्मात् सर्वप्रयत्नेन ब्राह्मणस्तु विशेषतः ।
प्रदद्याद् विधिवत् पिण्डान् गयां गत्वा समाहितः ॥
गयाभिगमनं कर्तुं यः शक्तो नाभिगच्छति ।
शोचन्ति पितरस्तं वै वृथा तस्य परिश्रमः ॥
(कूर्म० पु०)

सिद्धे चैषां कर्मणां नित्यत्वे नित्यविधिवदेतेऽप्यवश्यमनुष्ठेयाः । अन्यथा नित्यविधेरकरणे यथा प्रत्यवायस्तथैतेषामकरणेऽपि पुत्रादीनां प्रत्यवायापत्तिः । स प्रत्यवायः काशीमरणादिना मुक्तपितृकाणां पुत्राणां पितृक्रियाकरणाभावे जागर्ति । अत आनृण्यार्थं प्रत्यवायनिराकरणार्थञ्च पुत्रादिभिः काशीमरणान्मुक्तिभाजामपि पित्रादीनां मरणोत्तरक्रिया गयापिण्डदानादि कर्तव्यमेव । तस्मादमुक्ते पित्रादौ प्रेतत्वमुक्तिनरकोद्धारस्वर्गलोकब्रह्मलोकावाप्त्यादि यथायथं फलम्, मुक्ते तु पित्रादौ प्रत्यवायाभावः । सत्यां कामनायां शास्त्रोक्तफलं भवतीति सिद्धम् । अतो मुक्तपितृकाणाममुक्तपितृकाणां सर्वेषां कृते आवश्यकमेतत् कृत्यम् ।

एतस्य श्राद्धस्य फलमुभयगं भवतीति स्पष्टमुक्तं हरिहरभाष्ये—

प्रेतस्य श्राद्धकर्तुश्च पृथक् श्राद्धे कृते शुभम् ।
तस्माच्छ्राद्धं सदा कार्यं शोकं त्यक्त्वा निरर्थकम् ॥
एतावदेव कर्तव्यं सदा प्रेतस्य बन्धुभिः ।
नोपकुर्यान्नरः शोचन् प्रेतस्यात्मन एव च ॥

अत एकत्राफलत्वेऽप्यपरत्र साफल्यमस्य सिद्धम् । नह्यत्र काशीमृतस्य पितुरेव मरणोत्तरक्रिया पुत्रेणैव पूर्वोक्तदोषनिराकरणाय कर्तव्या, अपि त्वन्यत्र मृतानां प्राणिनां यावदधिकारिमध्ये पूर्वपूर्वाभावे उत्तरोत्तराधिकारिणः कृत्यं यथा निर्वर्तयन्ति, तथैवात्रापि काश्यां य एवाधिकारिणः सन्ति तैरेव तत्कृत्यं करणीयम् । यदिम एवं न कुर्युस्तदावश्यं ते प्रत्यवायिनः स्युः । अतः केवलं पितुः क्रियाया अकरणे पुत्रस्य प्रत्यवाय इति न कश्चिन्नियमः, किन्त्वकरणे सत्युपस्थितानां सर्वेषां मृताधिकारिणां प्रत्यवाय इति सिद्धान्तः ।

एवं काशीमरणान्मुक्तिं प्राप्तेऽपि पित्रादौ पुत्रादिभिराह्निकतर्पणमाह्निकश्राद्धं करणीयमेव। यतो हि नित्यविधावेतानि कृत्यान्यायान्ति—"पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम्" इति मनुः। तत्र के पञ्च महायज्ञाः? ब्रह्मयज्ञः, पितृयज्ञः, देवयज्ञः, भूतयज्ञः, मनुष्ययज्ञ इति। तत्र पितृयज्ञेन तर्पणादि प्रतिपादितम्। तत्र प्रत्यहमित्यभिधानात् प्रतिदिनं तत्पापक्षयस्यापेक्षितत्वात् सन्ध्यावन्दनादिवद् नित्यत्वमपि न विरुध्यत इति कुल्लूकभट्टाः।

एवं "कुर्यादहरहः श्राद्धम्" इति वाक्येन, तथा "नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम्। पार्वणञ्च·····द्वादशं स्मृतम्" इति विश्वामित्रवचनेन, "अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्तितम्" इति भविष्यपुराणोक्तेन च श्राद्धस्य नित्यता प्रतिपादिता। अत एषामकरणेऽपि प्रत्यवायः। तथैव नैमित्तिकानां पार्वणैकोद्दिष्टाभ्युदयिकतीर्थश्राद्धादीनां करणीयता नैमित्तिकत्वान्निश्चितैव। नैमित्तिकविध्यकरणेऽपि प्रत्यवायः शास्त्रोक्तः सुनिश्चित एव। काम्यपितृक्रिया तु कामनावशाद् यदि रोचते तर्हि क्रियताम्। तेन कर्तुरेवाभ्युदयः। अतः सर्वास्ववस्थासु पितृक्रिया न हातव्या मुक्ते पित्रादावमुक्ते वा।

ऊह्यमेतद् यदत्र कीदृशः प्रत्यवायः प्राप्यते? किं विहितकर्मानाचरणादाकस्मिकः प्रत्यवायो यथा राहूपरागे स्नानाद्यकरणे, अथवा मृतपित्रादिगतः प्रत्यवायः? उच्यते—उभयथापि प्राप्यते। ननु भवतु नाम प्रथमः। द्वितीयस्तु कथम्? यतो हि मुक्तात्मनां पापान्येव न सन्ति। अतस्तत्कृतपापप्राप्तिर्मुक्तात्मप्रेतकृत्याद्यकारिणां तत्संबन्धिनां कथं भवेदिति चेत्तत्रैवं तदा विचारणीयम्—नहि मुक्तात्मनां पापानि स्वयं विशीर्यन्ते, अपि तु ते पापपुण्यादयोऽन्यत्र तत्संबन्धिषु गच्छन्ति। तद्यथा छान्दोग्ये—"तस्य दायं पुत्रा उपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति। इत्थं यथा दुर्हृदः प्राप्नुवन्ति तत्कृतं पापम्, तथैव तत्संबन्धिपुत्रादयोऽपि। तदानीं तेऽपि दुर्हृद एव संवृत्ताः, तदुद्देश्यककर्मानाचरणात्।

अत्रेदं विचार्यम्—ननु यदुद्देश्येन कर्म विधीयते तत्कर्मफलं तद्गतमेव जायते जातेष्टिवत्, न तु कर्तृगतम्। तदा मुक्ते पित्रादौ तदुद्देश्यकतत्कर्मजायमानं पित्रादिगतं फलं व्यर्थमेव स्यात्, तदानीं तत्फलभोक्तुरभावात्। तदा व्यर्थफलात्मकस्य वैदिककर्मण और्ध्वदैहिकादेः, पित्रादिस्वर्गकामनया पुत्रादिकृतकूपाराममहादानादेश्च वैकल्यापत्तिः, इति चेन्न, मुक्तपित्रादिषु तदुद्देश्यककर्मफलाभावेऽपि तत्कर्मकर्तृपुत्रादिष्वेव तत्कर्मफलप्रसक्तेः, "शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्" इति जैमिनीयन्यायात्। अमुक्ते पित्रादौ तु तद्गतमेव फलं भवति श्येनयागवत्। एवञ्च न कस्याञ्चि-

दप्यवस्थायां कर्मणो वैफल्यापत्तिः । अपि च, यथा दुरितशून्येन विहितस्य मङ्गलस्य न नैष्फल्यं तद्वदत्रापि विचारणीयम् ।

ननु संन्यासिनां कृते यथा—"सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कार्यं नाशौचं नोदकक्रिया ॥ एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम् । न कुर्याद् वार्षिकादन्यद् ब्रह्मीभूताय भिक्षवे ॥" इति च दत्तात्रेयवचनात्, "एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह । सपिण्डीकरणाभावात् पार्वणं तस्य सर्वदा ॥" इति लौ० स्मृ० वचनात् । "संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद् यथाविधि । महालये तु यच्छ्राद्धं द्वादश्यां पार्वणं हि तत् ॥" इति वायुपुराणाच्चौर्ध्वदैहिकादिक्रिया निषिध्यते, एवञ्च शौनकोक्तविधिना ब्रह्मीभूतयतिसंस्कारनारायणबलिपार्वणब्राह्मणयतिभोजनाराधनादीनां पुत्रशिष्याभ्यामनुष्ठेयत्वं निगद्यते शास्त्रेषु, तथा काशीमृतानां प्राणिनां सद्योमुक्तिभाजामौर्ध्वदैहिकदाहपिण्डादिक्रियाणां निषेधः । अन्यविधिना यतिवत् संस्कारादीनां विधानञ्च कुत्रचित् शास्त्रेषु नोपलभ्यते । अतः सर्वस्मार्तमानवाधिकारप्राप्तौर्ध्वदैहिकादिसंस्कार ऋते परिव्राजकवैष्णवादिभ्यो निर्विशेषतया सर्वप्राणिसमानं काशीमरणाद् मुक्तिभाजं प्राणिनं प्रत्यपि संतिष्ठते, "विधिस्तूत्सर्गतः प्रवर्तते यावदपवादम्" इति न्यायात् । परिव्राजकवैष्णवादिषु तु विशेषशास्त्रेण बाध्यते । अत्र वैष्णवपदेन साधवो लोकरूढा गृह्यन्ते, न तु विष्णुदीक्षादीक्षिताः सर्वे । एवं हंसपरमहंसकुटीचकबहूदकादिसंन्यासिभेदविवक्षया संस्कारादिविषये नेदं प्रोक्तं मया, तस्यानवसरत्वात्, किन्तु यत्कृते एतन्निषिद्धं तदेवाभिलक्ष्योक्तम् ।

ननु यच्चोक्तं संन्यासिनां पिण्डोदकादिप्रेतक्रिया नास्तीति तत्कस्य हेतोः ? एता क्रियाः प्रेतत्वविमुक्तये शास्त्रेण विधीयन्ते, तच्च प्रेतत्वं संन्यस्तानां संन्यासादेव निवृत्तम् । उक्तं चोशनसः स्मृतौ—"त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते" इति । तन्निमित्तकं नवषोडशादिश्राद्धादिकमपि निषिद्धम्—

> एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह ।
> सपिण्डीकरणाभावात् पार्वणं तस्य सर्वदा ॥ (लौ० स्मृ०) इति ।

अस्यायमभिप्रायो यत् संन्यासिनो मुक्तात्मानो सुखस्वर्गाकाङ्क्षारहिता ब्रह्मीभूता ब्रह्मविदो भवन्तीति । उक्तञ्च मनुना—

> यो दत्त्वा सर्वभूतेभ्यः प्रव्रजत्यभयं गृहात् ।
> तस्य तेजोमया लोका भवन्ति ब्रह्मवादिनः ॥ इति ।

एतदेव नहि, अपि तु संन्यासिनः प्राणवियोगो न सर्वसामान्यवद् मृत्युपदेनोच्यते, नापि तद्दिनं मृताहपदवाच्यम्, किन्तु मृत्युः सिद्धिपदेन, मृताहश्च सिद्धिदिनपदेन कथ्येते। तस्य ब्रह्मभूतत्वाद् उत्क्रान्तिगत्याद्यभावात्। अत एव तेषां कृते तदूर्ध्वलोकगमनकामनया सर्वं दाहादिकृत्यं निषिध्यते। तादृशमुक्तात्मत्वादिधर्मसमानत्वे सति काशीतनुत्यजां मुक्तात्मनां प्राणिनामेताः क्रियाः कथमुपयुज्यन्ते ? इति चेदुच्यते—संन्यसनात्प्राक् संन्यासेच्छुर्जनस्तुरीयाश्रमाधिकारसिद्ध्यर्थं स्वस्य नवश्राद्धषोडशश्राद्धसपिण्डीकरणानि कृत्वाऽन्यानि च संन्यासपद्धत्योचितानि कृत्यानि निर्वर्त्य तुरीयाश्रमे प्रवेष्टुमर्हति। अतस्तेषां मरणोत्तरं यत्कृत्यं तत्तु तैर्मरणात् किं संन्यासादपि प्राक् स्वयमेवानुष्ठितम्। तेन कृतकृत्यतया तत्र यतिमृत्यौ पुनस्तत्कर्माऽनावश्यकमित्यभिलक्ष्य शास्त्रनिषेधः प्रसक्तः। यतो हि प्रेतत्वविमुक्तिकमेतत् कर्म, अतोऽनेन विना तद्विमुक्तिर्न जायते। अत एवोक्तं त्रिदण्डग्रहणादेव प्रेतत्वं न जायते, तथा च त्रिदण्डग्रहणे सति प्रेतत्वाभावे प्रेतत्वविमुक्तिकैकोद्दिष्टादिकर्मनिषेधकवाक्यम्—"एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह" इत्यादि चारितार्थ्येन संगच्छते। अत्र त्रिदण्डग्रहणात् प्रेतत्वविमुक्तिः कथिता, न तु ज्ञानाद् ब्रह्मावाप्तेश्च। एतेनेदमायाति यत् तत्कर्म कृत्वाऽत्राश्रमे प्रविशति। तेन तत्कर्मानन्तरमेव प्रेतत्वविमुक्तिः, अन्यथा ज्ञानाद् ब्रह्मावाप्तेश्चेत्यादि वदेत्। यदि त्रिदण्डग्रहणं तस्यैवोपलक्षणमिति मन्येत, तदा किं संन्यासाश्रमप्रवेशानन्तरमेव सद्यो ब्रह्मावाप्तिः स्यादिति कोऽपि स्वीकर्तुं न प्रभवेत्। यतो ह्येतत् साधनम्, न तु साध्यम्। भवति च लोके एवं यत् संन्यासाश्रमप्रवेशानन्तरं कतिपयैरेवाहोभिः पञ्चत्वं प्राप्नोति कोऽपि यतिः। तस्य ब्रह्मावाप्तौ सत्यामसत्यां वा, अथ च ब्रह्मज्ञानाभावे निश्चितेऽपि लोकास्तस्य ज्ञानिवत् संस्कारमाचरन्ति। अतस्तत्र वयमेवं निश्चिन्मो यत् पूर्वं तत्कर्म सर्वं कृतं चेदतः पुनस्तस्य न काचनावश्यकता। अपरं यदवशिष्यते तस्य विधानं त्वाकरनिबन्धादिग्रन्थेषु स्पष्टं दृश्यते। तद्यथा—

संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद् यथाविधि।
महालये तु यच्छ्राद्धं द्वादश्यां पार्वणं हि तत्॥ (वा० पु०)

विशेषतस्तु धर्मसिन्धुनिर्णयसिन्ध्वादिषु यतिसंस्कारकृत्यं द्रष्टव्यम्। न तादृशी यतिवत् केषाञ्चिदपि काशीमृतानां गृहिणां मरणात् प्राक् कर्मसम्पन्नता जायते, येन तत्कर्मराहित्यं तेषां स्यात्। अतः सर्वं कर्मावशिष्टं करणीयमेवास्ति, अज्ञातज्ञापकवाक्योपलब्धिं विना। अथ च यतीनां दाहादिक्रिया न जायते। तत्र कारणं तु यतिराश्रमप्रवेशात् पूर्वमेवाग्न्यादिसंबन्धं विसृज्य

## काश्यां मृतानां जीवानां कृतेऽन्त्येष्ट्यादिविचारः

आश्रमप्रविष्टो निरग्निरक्रियो भूत्वा तपति। एतदाश्रमे स्वार्थे देवार्थे वाऽग्निं न स्पृशति। तस्यैवंभूतस्य यतेर्मरणोत्तरमग्निस्पर्शरहितेन यतिशरीरेण सहाग्निसंबन्धो नोचितो लौकिकदृष्ट्यापि। "न तस्य दहनं कार्यं नाशौचं नोदकक्रिया" इति बलवान् शास्त्रनिषेधोऽपि वर्तते। तादृशोभयकारणशून्यत्वात् काशीतनुत्यागिनां दाहादिक्रिया उचिता एव।

अथ मन्ये यथा यतीनां ब्रह्मज्ञानादेव प्रेतत्वविमुक्तिः, तथा काशीमृतानामपि ब्रह्मज्ञानादेव प्रेतत्वविमुक्तिर्निश्चिता। ब्रह्मज्ञाने च कारणं काशीमरणमेव। तथा चोक्तम्—

"अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे" इति जाबालश्रुतिः।

आदित्यपुराणे—

अत्र विश्वेश्वरो देवः सर्वेषामेव देहिनाम्।
ददाति तारकं ज्ञानं संसारोन्मोचकं परम्॥

काशीखण्डे—

"सर्वान् जन्तून् मोचयेदन्तकाले विश्वेशोऽत्र श्रोत्रमन्त्रोपदेशात्" इति।

तत्र ब्रह्मज्ञानात् सत्यामपि मुक्तौ यतीनां कृते श्राद्धक्रिया प्रतिपादिता स्मृत्यादिषु—

यतेरेकादशदिने पार्वणश्राद्धनामके।
संप्राप्ते तु तदा कश्चिद् यश्चिद् वा सुतेतरः॥
तदात्मानं ततो भूयः अन्तरात्मानमेव च।
परमात्मानमुद्दिश्य कर्म तत्तु प्रसाधयेत्॥
पुत्रस्तु तातत्रितयं समुद्दिश्यैव तच्चरेत्।
यतेस्तु ब्रह्मरूपत्वाद् ब्रह्मणः सर्वरूपतः॥
पित्रादिरूपं वस्वादिरूपं सर्वं च तस्य वै।
संगच्छतेऽतस्तत्सूनुः पितृरूपेण तच्चरेत्॥
शिष्यादिकस्तथान्यश्चेदात्मादित्रयरूपतः।
तत्कार्यमिति धर्मज्ञसमयो विधिचोदितः॥
द्वादशेऽहनि तत्पश्चान्नारायणबलिः परा।
तदुद्देशेन कर्तव्या तत्र साक्षाद्धरिः परः॥

(लौ० स्मृ० ३७० पृ०)

इति समानन्यायेन काशीमरणान्मुक्तस्य जीवस्याप्यौर्ध्वदेहिकक्रियापिण्डदानादिकं चावश्यं विधेयमेव। शास्त्रप्रामाण्यादनिष्फलत्वमुभयत्र समानमेव। विचार्यमत्र यद् नारायणबलिकृत्ये तदङ्गीभूतं श्राद्धमपि विहितम्। तस्मिन् श्राद्धे वेदिद्वयं प्रेतस्य वर्तते। तत्र ब्रह्मीभूतस्य यतिनः सर्वमयत्वात् प्रेतश्राद्धं यथा तत्र संपादयिष्यते, तथैवात्रान्त्येष्टिक्रियायां ब्रह्मीभूतस्य काशीमृतस्य सर्वमयत्वात् कथमेतन्न निर्वक्ष्यते।

तत्र यतीनां ब्रह्मज्ञानात् सद्योमुक्तत्वप्रतिपादनेऽपि तत्तच्छास्त्रैर्विहितानां नारायणबल्यादि-कर्मणां विधाने तेषां प्रामाण्यसंपादनाय तावत्पर्यन्तं प्रतिबद्धा, तदनन्तरमविलम्बेनैव मुक्तिर्भवति। अन्यथा शास्त्राप्रामाण्यापत्तिः। एवमेव काशीमृतानामप्यौर्ध्वदैहिकक्रियादिसम्पादनपर्यन्तं मुक्तिः प्रतिबध्यत एव। ततस्तदनन्तरं सद्योमुक्तिर्लभ्यते।

अस्मिन् विषयेऽपर एष विचारः प्रस्तूयते—अस्मिन् हि भारतीयसमाजे व्रताधिकारि-विधौ श्रेणीद्वयेन विभक्ता मानवा वर्तन्ते। तत्रैके स्मार्ता अपरे वैष्णवा इति। तत्र व्रतविषये महानिबन्धेषु वैष्णवस्य स्मार्तस्य च परिभाषा स्वपारम्पर्यप्रसिद्धमेव वैष्णवत्वं स्मार्तत्वमित्युक्तम्। एनयोर्विचारविषये बहूनि वाक्यानि कालमाधवे उपलभ्यन्ते। तथापि सामान्यतः "विष्णवर्पिता-खिलाचारः स हि वैष्णव उच्यते" इति स्कान्दीयवचनात् त्यागिन एव वैष्णवा इति सुस्थम्। स्मार्ताश्च स्मृत्यनुकूलाचारवन्तः। अर्थात् स्मार्तत्वेन गृहिणो वैष्णवत्वेन यत्यादयो गृह्यन्ते। तत्र वैष्णवानां कृते यद् विहितं तत्तेभ्योऽस्तु। स्मार्तास्तु स्मृतिमुपजीव्यैव स्थातुं शक्नुवन्ति गार्हस्थ्ये।

यतीन् विहाय येऽन्ये गृहिणः काशीमृतास्ते के? किं ते यतयो विरक्ता? उताहो वर्ण-धर्मवन्तः? नात्र विरक्तपदवाच्यास्ते कदापि भवितुमर्हन्ति। यतो हि ते कुटुम्बैः सेवितास्तत्रैव वसन्तः पारिवारिकसुखदुःखगृध्नवः शरीरं त्यजन्ति न विरक्तवत्। अतस्ते सत्यपि मुक्तिलाभे वर्ण-धर्मवत्त्वात् स्मृत्यनुकूलशरीरसंस्कारं प्राप्तुमलम्। उक्तञ्च याज्ञवल्क्ये—

ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः।
निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः॥ इति।

तत्रैव मिताक्षरायाम्—"निषेको गर्भाधानम्, तदाद्याः। श्मशानं तत्संबन्धिन्यन्त्येष्टिः, तदन्ताः क्रिया मन्त्रतो मन्त्रकरणिकाः। तेषां वै द्विजानामेव, न तु शूद्रस्यापि। अमन्त्रकास्तु तस्यापि क्रियाः" इति।

## काश्यां मृतानां जीवानां कृतेऽन्त्येष्ट्यादिविचारः

एवं वर्णधर्मवतां समेषां मुक्तानाममुक्तानामन्त्येष्टिक्रियामुत्सर्गतः प्राप्तां विनापवादं को निवारयेत् । अनाथप्रेतसंस्कारकरणे—

अनाथप्रेतसंस्कारादश्वमेधफलं लभेत् ।
प्रेतनिर्वापणं प्रोक्तमत्र संस्कारशब्दतः ॥

इति महतः पुण्यस्य श्रूयमाणत्वेऽपि को वराको गृही स्वकुटुम्बिनं मृतं त्यजेत् । कुटुम्बाभावे यतयोऽपि कुटुम्बप्रेतकृत्यं कर्तुं समर्थाः किमुत वक्तव्यं गृहिणाम् । उक्तञ्च—

विप्राभ्यनुज्ञया कुर्यात् कर्ममात्रं विशेषतः ।
पितृकृत्यं प्रेतकृत्यं तयोर्नो चेद् यतेरपि ॥
विप्रानुज्ञां यतिरपि लब्ध्वा स्नात्वार्द्रवासतः ।
प्रेतकृत्यं प्रकुर्वीत न चेत् कृत्यं तु तत्र तु ॥ इति ।

( आङ्गि० स्मृ० १४४-४५ )

एतेनेदमायाति—यो मृतात्मा यस्मिन् वर्णे यस्मिन्नाश्रमे वसन् स्वतनुं त्यजति, तस्य शरीरसंस्कारं तदधिकारिणो वर्णाश्रमधर्मानुकूलं पुराणस्मृतिगृह्यसूत्रानुसारेण कृत्वैव स्वाधिकारत्वरक्षणसमर्था निष्कल्मषा भवितुमर्हन्ति । एष एव सिद्धान्तः प्रतिभात्याकरग्रन्थावलोकनेन ।

केचित्त्वित्थं समादधति—प्रकर्षेणेतो गतः प्रेतः, प्रकृष्टत्वं चास्यात्मनः सोपस्करसर्वकरणप्राणादिसहितत्वे सति इहलोकपरित्यागपूर्वकपरलोकावाप्तिरूपमिति विवक्षितम् । अन्यथा 'प्र' इत्यस्य गमनक्रियायां प्रयोगो न जायते, "स्वमपीतो भवति" इति श्रुतिवाक्यवत् । अस्माँल्लोकात् प्रेत्याभिगच्छन्तीत्यत्र प्रेत्येत्यस्य मृत्वेत्यर्थो बोध्यः । एवं व्युत्पत्त्या सर्वे मृतात्मानः प्रेतपदवाच्या भवन्ति । तादृशशब्दप्रयोगो यथा छान्दोग्ये—"स जातो यावदायुषं जीवति । तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति । यत एवेतो यतः संभूतो भवति" ( ५।१०।२ ) । प्रेतं मृतमिति भाष्यम् । पारस्करगृह्यसूत्रे—"अद्विवर्षे प्रेते मातापित्रोराशौचम्" ( ३।१०।२ ) । तत्र हरिहरभाष्यम्—"प्रकर्षेण इतो गतः प्रेतो मृतः" इति ।

यदि मर्त्यो द्विजो भुङ्क्ते हूयते यदि वानले ।
शुभाशुभात्मकैः प्रेतैर्दत्तं तद् भुज्यते कथम् ॥ ( मा०पु० )

तमेवंभूतं मृतात्मानमुद्दिश्येयं प्रेतक्रिया विहिता। सा क्रिया यथाविधि सर्वेषां प्राणिनां कृते भवितुमर्हा। न विचिकित्साऽत्र कर्तव्या—ये प्रेतास्तेभ्य एवेयं न तु मुक्तेभ्य इति। सामान्यविधिप्राप्तस्य विना निषेधं प्रवृत्तिः सर्वत्र जागरूका भवति, आवश्यकेऽनावश्यके च पर्जन्यवदिति।

एतन्मह्यं न रोचते यतो हि भवतु नाम प्रेतस्य सामान्यतो मृतोऽर्थ इति, नात्र कश्चन ममाग्रहः, किन्त्वस्मिन् स्थले प्रेतपदं प्रेतयोनिपरमेव विवक्षितम्। उक्तञ्च—"अर्वाक् सपिण्डीकरणात् प्रेतो भवति वै मृतः" इति, "यस्यैतानि न दीयन्ते प्रेतश्राद्धानि षोडश। पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि॥" (या० सं० ७।८) इति। अन्यथा सपिण्डीकरणादूर्ध्वं पितृशब्दस्य प्रयोगस्य व्यर्थत्वापत्तिः, मृतकवाचकात् केवलात् प्रेतशब्दादेव सर्वत्र निर्वाहात्।

अन्यश्राद्धेषु पार्वणादिषु पित्रादिशब्दैर्वस्वादिदेवा एव तत्तद्रूपेण पुत्रादिप्रदत्तं श्राद्धीयद्रव्यमादाय अग्निष्वात्तादिदिव्यपितृद्वारा देवतिर्यग्मनुष्यपशुस्थावरादियोनिप्राप्तेभ्यः पित्रादिभ्यस्तत्तद्भोग्यवस्तुरूपेण प्रापयन्ति। यथोक्तं मात्स्ये—

वसून् वदन्ति च पितॄन् रुद्रांश्चैव पितामहान्।
प्रपितामहांस्तथादित्यानित्येवं वैदिकी श्रुतिः॥ १९।३।

हरिहरभाष्ये—

देवतायतनस्थाने तिर्यग्योनौ तथैव च।
मनुष्येषु तथा प्रैति श्राद्धं दत्तं स्वबान्धवैः॥ इति।

मात्स्ये—

देवो यदि पिता जातः शुभकर्मानुयोगतः।
तस्यान्नममृतं भूत्वा दिव्यत्वेऽप्यनुगच्छति॥

दैत्यत्वे भोगरूपेण पशुत्वे च तृणं भवेत्।
श्राद्धान्नं वायुरूपेण सर्पत्वेऽप्युपतिष्ठति॥

पानं भवति यक्षत्वे गृध्रत्वेऽपि चामिषम्।
दनुजत्वे तथा माया प्रेतत्वे रुधिरोदकम्॥

## काश्यां मृतानां जीवानां कृतेऽन्त्येष्ट्यादिविचारः

मनुष्यत्वेऽन्नपानानि नानाभोगरसं भवेत् ।
अग्निष्वात्तादयस्तेषामाधिपत्ये व्यवस्थिताः ॥
नामगोत्रकालदेशानवान्तरगतानपि ।
प्राणिनः प्रीणयन्त्येते तदाहारत्वमागतान् ॥ इति ।

अत्रेदं ध्येयं यन्मुक्तात्मनां यतीनामपि पार्वणादि विहितम् । तदा तत्र ते देवाः श्राद्धीय-वस्तु समादाय केन रूपेण ब्रह्मरूपिणे यत्यात्मने सर्वमयाय किं भोग्यं वस्तु प्रयच्छन्ति ? को वा भोगः कीदृशी च लिप्सा तस्य ब्रह्मणोऽवशिष्यते ? स तु निरतिशयानन्दः, पूर्णः, निरीहः, अभोक्ता च । तदा यत्युद्देश्यकश्राद्धस्य का गतिः ? ईदृशशङ्कावसरे यदुत्तरं स्याच्छ्रीमतां तदेवास्माकं काशीमृतान्त्येष्ट्यादिक्रियास्वीकर्तॄणामपीष्टम् ।

अवशिष्टं त्वेतद् यत्तत्र पित्रादीनां देवत्वेन स्वरूपत्वेन वस्वादयो देवाः शास्त्रेषु निर्दिष्टा वर्तन्ते । भवन्तु ते यत्यादीनां मुक्तात्मनामपि, किन्तु प्रेतस्य कोऽपि देवो न निर्दिष्टः । अतः स स्वयमेवोपादत्ते प्रत्तम् । अयं तु प्रेतश्छायारूपेणायोनिजशरीरेणात्रैव तिष्ठति । नास्य परलोक-परयोनिगमनं भवति, यत्र तस्मै तद् वस्तु प्रापयितुं देवानामावश्यकता प्रतिभाति । तर्त्तर्हि मुक्ता-त्मनां प्रेतत्वरहितानां प्रेतक्रियायाः का दशा ? या दशा यत्युद्देश्यकपार्वणादेः सैवास्या अपि, किमन्तर्गडुना प्रश्नेन । यदि तेषां पित्रादीनां देवता नियताः, भवतु नाम तत् । सर्वभूतमयः सर्वात्मकः सर्वेश्वरः परमात्मैव देवोऽत्राविहितत्वेऽपि प्रेतस्येति । यथा यस्य क्षेत्रस्य वस्तुनः कालस्य निर्दिष्टदेवाभावे विष्णुर्देवस्तथात्रापि बोध्यः । स परमात्मा यथा मुक्तस्य पार्वणादिग्रहीता तथा मुक्तिनिमित्तकप्रेतश्राद्धादिग्रहीतापि यदि भवेत्तर्हि का ते क्षतिः । स तत्र तथा पार्वणादि-वस्तु गृहीत्वा यत्करोति तथात्राप्येतद् वस्तु समादाय तदेव करोतीति का विप्रतिपत्तिः । अतोऽ-स्मिन् विषयेऽस्माकमेष पक्षो राद्धान्तत्वेनास्ते यच्छास्त्रे यद् यद् यथा यथा वर्णितं देशे कुले समाजे काले च शिष्टैर्यद् यदाचरितं शास्त्रीयं कर्म तत्तदनुसर्तव्यम् । नायमाधुनिकविज्ञानवादो नापि दर्शनं नाप्यभियोगो वा यत्र तर्ककर्कशचातुर्या अवकाशः । एतत्तु श्राद्धं नाम । श्रद्धयैतत् संपाद्यते विश्वासोऽस्य पृष्ठभूमिर्हृदयमेवास्य धरातलम् । नायं तर्कनिकषोपले सुवर्णवद् निष्कृष्य निघृष्य वा परीक्षितव्यः परीक्षकैः साम्प्रतिकैः । परीक्षितोऽयं विषयस्तर्कमप्रतिष्ठाप्य श्रुतिशास्त्र-विशारदैः पुरातनैर्मननादिपूर्वकं हृदयनिकषोपले । मया तु यथामति तेषामेव वचांस्युपन्यस्य किञ्चिद् विवेचितम् । अधिकं तु तत्रैवाकरग्रन्थेऽवलोकनीयम् ।

ये तु सर्वशास्त्रसिद्धान्तितोपायाद् ज्ञानाद् ऋतेऽन्योपायान्न मुक्तिरिति स्वीकुर्वन्ति, तथा च काशीमरणेऽपि भैरवीयातनाद्यङ्गीकुर्वन्ति, तत्रैषां कर्मणां साफल्ये न काचन विप्रतिपत्तिरिति।

अनेन विचारेण श्रीमतां गुणैकपक्षपातिनां विदुषां लेशमात्रामोदो भवेद् यदि तदात्र मे परिश्रमः सफल इति मन्ये ॥



# पाणिनिस्मृतस्य शिशुक्रन्दीयग्रन्थस्य स्वरूपम्

श्रीरामशङ्करभट्टाचार्यः, अनुसन्धानसंस्थानम्, वा० सं० वि० वि० वाराणसी।

'शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः' (४।३।८८) इति पाणिनीयसूत्रेण शिशुक्रन्द-शब्दात् छप्रत्यये शिशुक्रन्दीयशब्दस्य सिद्धिर्भवति। अत्र 'अधिकृत्य कृते ग्रन्थे' (४।३।८७) इत्यस्याधिकारो वर्तते, अतः 'शिशुक्रन्दमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः' इत्युच्यते व्याख्यातृभिः।

कोऽयं शिशुक्रन्द इति? शिशुक्रन्दीयग्रन्थः काव्यं वा शास्त्रविशेषो वेत्यत्र चिन्त्यते। शिशुक्रन्दीयग्रन्थः काव्यविशेष इति डॉ० वासुदेवशरणादयः[1]। दृश्यकाव्यमयं ग्रन्थ इति राधाकुमुदमुखोपाध्यायः (Hindu Civilization, पृ० १२२)। शिशोः कृष्णस्य जन्मकालिकं क्रन्दनमधिकृत्यायं ग्रन्थः प्रणीत इत्यनुमिनोति श्रीयुधिष्ठिरो मीमांसको वासुदेवशरणश्च[2]।

अस्माभिरत्र कश्चन नूतनोऽभिप्राय आविष्क्रियते। व्याख्यातॄणां मतेन 'अधिकृत्य कृते ग्रन्थे' इति सूत्रेण सह श्रव्यकाव्यस्य दृश्यकाव्यस्य च न नियतः कश्चित् संबन्धो वर्तते। कमपि विषय-मधिकृत्य यो ग्रन्थः प्रणीयते (स काव्यरूपो भवतु वा न वेति) स एवात्र लक्ष्यभूतः, अत एव 'ज्योतिरधिकृत्य कृतो ग्रन्थः' इत्यर्थे [3]ज्योतिषशब्दमप्यनेनैव सूत्रेण निष्पादयन्ति वैयाकरणाः।

---

1. As to Kāvyas Pānini mentions शिशुक्रन्दीय as actual works (India as known to Pānini, p. 339).
२. "शिशुक्रन्द = बच्चों का रोना (संभवतः इसमें कृष्ण के जन्म-समय रोने और पहरेदारों के जागने का आख्यान हो" (संस्कृत व्याकरण शास्त्र का इतिहास पृ० २५७)। "The name शिशुक्रन्दीय suggests that the poem related to the birth of कृष्ण, literally a work dealt with the crying of child" (India as known to Pānini p. 340)
३. ज्योतिषशब्दविषयेऽन्यत्र विचारयिष्यते।

४।३।८७ सूत्रस्य संबन्ध आख्यानेन आख्यायिकया चास्त्येव (द्रष्टव्या भाष्यप्रदीपोद्द्योताः)। अतो नेदं कथयितुं शक्यते यदनेन सूत्रेण निष्पन्ना ग्रन्था नियमतः काव्यरूपा एव 'भवेयुरिति। यदि नाम ४।३।८७-८८ सूत्रयोः संबन्धः काव्यनाटकाभ्यामेव स्यात् तर्हि 'द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः' इति वार्त्तिकस्योदाहरणे गौणमुख्येति पदप्रदानमनर्थकं स्यात्, न खलु गौणमुख्यमिति कस्यचित् काव्यस्य, नाटकस्य, आख्यानस्य, आख्यायिकाया वा नामेति ज्ञातव्यम्। ४।३।८७ सूत्रीयोदाहरणे वाक्यपदीयेति पदमुपात्तं काशिकायाम्, न च वाक्यपदीयनामा ग्रन्थः काव्याद्यन्तर्भूतो भवितुमर्हति। अतो गम्यते कमपि निश्चितं विषयमवलम्ब्य यत्र ग्रन्थप्रणयनं भवति, तत्रैवास्य सूत्रस्य प्रवृत्तिरिति। एवं शिशुक्रन्दीयमिति काव्यस्य नाटकस्यैव वा नामेति कथयितुं न शक्यते तर्कतः।

किमस्य शब्दस्य तात्पर्यमिति जायते विचारणा। प्राञ्चः काशिकादिव्याख्याकृतस्तु 'शिशूनां क्रन्दनम्' इत्यभिदधुः। नारायणः 'शिशूनां क्रन्दनविषयो ग्रन्थः शिशुक्रन्दीयः' इत्याह (द्र० प्रक्रियासर्वस्वम्)[२]। बहुवचनान्तं पदमेव सर्वत्र दृश्यते। अर्वाचीना विद्वांसो वासुदेवशरण-युधिष्ठिरमीमांसकादयः शिशुपदमेकवचनान्तं मन्यमानाः शिशुपदेन कृष्णं लक्षयन्तीति पूर्वमुक्तम्। न खलु कृष्णकर्तृकं जन्मकालिकं क्रन्दनमेतादृशं विस्मयजनकं वस्तु, यदाश्रित्य ग्रन्थरचनाप्रवृत्तिः कस्यचित् स्यादिति युक्तमुत्पश्यामः।

अनुसन्धाने कृते सत्येवं विज्ञायते—शिशूनां क्रन्दनम् (बालानां रोदनम्) आश्रित्य (अर्थाद् बालरोगमधिकृत्य) यः कश्चिद् ग्रन्थो विरचितः स एव 'शिशुक्रन्दीय'पदेनोच्यते स्म। अत एव शिशूनामिति बहुवचनप्रयोगः सार्थको भवति व्याख्यातॄणाम्। आह च पुरुषोत्तमदेवो भाषावृत्तौ—"शिशुक्रन्दरोगमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः" इति।

---

१. उक्तं च काणेमहोदयेन—"The Sutra of Pānini (अधिकृत्य कृते ग्रन्थे IV. 3.87) and the following sutra indicate the existance of secular works before Pānini's day which may have been poetic (History of Sanskrit poetics, p. 320). अत्र may have been poetic (काव्यरूपत्वं संभाव्यते) इति कथनं साध्वेव।

२. पेरुसूरिरपि तथैवाह—"शिशूनां क्रन्दने प्रोक्तः शिशुक्रन्दो घञा ततः। अधिकृत्य कृते ग्रन्थे शिशुक्रन्दीय उच्यते॥" (औणादिकपदार्णवे १।१६६)।

## पाणिनिस्मृतस्य शिशुक्रन्दीयग्रन्थस्य स्वरूपम्

वस्तुतस्त्वायुर्वेदतन्त्रे शिशुक्रन्दीयस्य सत्ता दृश्यते। शिशुक्रन्दनं खलु बालरोगस्य मुख्यं ज्ञापकं भवति; बालरोगाणां चर्चा च कौमारभृत्यनामकेऽङ्गे क्रियते। आह च भगवान् सुश्रुतः—'कौमारभृत्यं नाम कुमाराणां धात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्यग्रहसमुत्थानां च व्याधीनामुपशमार्थमिति" (सूत्रस्थाने १।८)। दुष्टस्तन्यग्रहोत्थव्याधिपीडितः शिशुः क्रन्दनमेव बहुलं करोतीति दृश्यते।

कौमारभृत्यान्तर्गतायां बालरोगचर्चायां क्रन्दनशब्दस्य बहुधा प्रयोगोऽप्यायुर्वेदग्रन्थेषूपलभ्यते, क्वचिद् रोदनशब्दोऽपि (सुश्रुत- उत्तर० २७।४)। अग्निपुराणान्तर्गतबालतन्त्रविवरणेऽपि (१९९ अ०) शिशुशब्दः क्रन्दनशब्दश्च प्रयुक्तौ बहुधा।

शिशुशब्दः कौमारभृत्यविचारे बहुलं प्रयुक्तो दृश्यते; सुश्रुतोत्तरतन्त्रमत्र द्रष्टव्यम्। (२७।७;२७।१२;२७।१५;२९।२;३१।२;३३।२; ३६।२ इत्येतेषु स्थलेषु शिशुशब्द एव प्रयुक्तः)।

एतेनेदं स्पष्टं भवति यदत्र शिशुक्रन्दशब्देन बालानां रोगजनितं रोदनं गम्यते। आयुर्वेदविद्भिः क्रन्दनमेतदधिकृत्य यो ग्रन्थः प्रणीतः स एव शिशुक्रन्दीयपदवाच्योऽभूदिति। यथा खल्वद्यत्वे काश्यपसंहिता कौमारभृत्यसंबद्धा प्रचलति, तथैवापरे ग्रन्था बालरोगविषयका आसन्, यत्र शिशुक्रन्दविषयको विशिष्टो विचारः कृत आसीदिति विज्ञायते। कश्च पाणिनिपूर्वभवः शिशुक्रन्दीयो ग्रन्थ इति मृग्यम्॥



# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१. एषा देशे विदेशे च लब्धप्रसारा त्रैमासिकी संस्कृतपत्रिका ।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठभाद्रपदमार्गशीर्षफाल्गुनपूर्णिमासु भवति ।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु मौलिकानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति ।

४. अस्यां वाराणसेयसंस्कृतविश्वविद्यालयस्य विदुषां मौलिकविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते ।

५. लेखकेन प्रकाशितस्य निबन्धस्य पञ्चविंशतिः प्रतिमुद्रणान्युपलब्धानि स्युः ।

६. अस्य वार्षिकं मूल्यं सप्त रूप्यकाणि, प्रत्यङ्कं च रूप्यकद्वयं वर्तते ।

७. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, वाराणसेयसंस्कृतविश्वविद्यालय, वाराणसी-२" इति संकेतेन विधेयः ।

---

प्रकाशक—श्री क्षेत्रेशचन्द्र चट्टोपाध्याय, संचालक—अनुसंधान संस्थान, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी ।

मुद्रक—श्री बलदेवदास, संसार प्रेस, संसार लिमिटेड, वाराणसी ।